## उपोद्घातः ।

सुगृहीतनामधेयभगवद्धरिभद्रसूरिसूत्रितां वृत्तिमेतां ललितविस्तराख्यां प्रादुर्भाव्यमानां प्रज्ञाचक्षुष्काः प्रतीच्छन्तु, इयं च वृत्तिरादिमैव, यतो विंशत्यधिकानामप्युपलभ्यमानानां चैत्यवन्दनसूत्रविवरणानां नैकं किमपि विवरणमितः प्राचीनं। अन्यच्च-भगवान् श्रीहरिभद्रोऽप्यारम्भे यदुवाच—'यावत्तथापि विज्ञातमर्थजातं मया गुरोः। तावदेव निगदतः' (२ श्लोकः) तत् ज्ञापयति यदुत न श्रीहरिभद्रसूरिकाले विवरणं किमप्यस्य वित्तमभूत्, अन्यथा यथा-'यद्यपि मया तथाऽन्यैः कृताऽस्य विवृति' रिति आवश्यकव्याख्यायामन्यकृतिं सस्मार तथाऽत्रापि प्राचीनं चेदभविष्यद्विवरणं निरदेक्ष्यदवश्यं, न च गुरोरधिगतमात्रार्थविवरणकृतिं च प्रत्यज्ञास्यत्। किञ्च-श्रीमतां सत्तासमये ऽनेकास्ते आसन् स्वयूथ्या ये चैत्यवन्दनसूत्रं मन्त्र इवाविवृतमेव स्वस्मरणेनानिष्टघातपूर्वकेष्टप्राप्तिनिबन्धनममंसत, तदर्थमेव च भगवान् 'तत्सम्पादनार्थमेव च नो व्याख्याऽऽरम्भप्रयासः' इत्युक्त्वा व्याख्यावोधजन्यमेव सम्यक्करणं ज्ञापितवान्, पर्यवसानेऽपि च व्याख्यायाः 'शुष्केक्षुचर्वणप्रायमविज्ञातार्थमध्ययन' मित्यपि निजगाद, केचित्तु चैत्यवन्दनस्य सुगमतां मन्वाना व्याख्याया निरर्थकताममिमेनिरे तानपेक्ष्य चोवाच वाचंयमपुङ्गवः 'ये सत्वाः कर्मवशतो मत्तोऽपि जडबुद्धयः। तेषां हिताय गदतः' इति प्रारम्भ एव वाक्यम्, केचित्त्वविवृतं चैत्यवन्दनसूत्रं दृष्ट्वा विभाव्य चाभावितार्थत्वं निष्फलतां निश्चिक्यिरे तत्क्रियायाः, कथमन्यथा जङ्घाचारणविद्याचारणादिकृतायाः यस्यास्त्रिसन्ध्यमकरणे महानिशीथागमोदितप्रायश्चित्तसद्भावे सति तस्याः साफल्यमाविष्कर्त्तुं प्रयासं विदध्यात्, साफल्यसम्पत्तय एव च क्रियाया विवर-

॥ २ ॥

णस्य च सम्यकृतिः 'प्रायोऽधिकृतसूत्रोक्तेनैवे' त्यादिना अधिकारलक्षणानि च 'एतद्बहुमानिन' इत्यादिना तल्लक्षणानामपि लिङ्गानि च 'तत्कथाप्रीतिः' इत्यादिना प्रतिपादितानि, तच्चतश्चैत्यवन्दनस्य विधिर्विवरणं च श्रीमद्धरिभद्रोपज्ञं,नान्यत्र क्वापि श्रीमद्भ्यः प्राक्तनेषु सूत्रनिर्युक्तिभाष्यचूर्णिवृत्त्यादिषु दृश्येते इमे,चैत्यवन्दनभाष्यकारश्रीदेवेन्द्रसूर्यादिभिर्ललितविस्तरातोऽधिकारा नव गृहीता इत्युक्तम्। सूरिभिश्च कुलमण्डनाख्यैर्विचार (सार) सङ्ग्रहे स्पष्टमेतत्प्रामाण्येनैव चैत्यवन्दनविधेः प्रामाण्यं प्रत्यपादि,स्पष्टितं च तत्र श्रीमतां पूर्वधरासन्नकालभावित्वमपि, तथा च ये वैयावृत्त्यकरसूत्रतत्स्तुत्योरपलापकास्ते दूरतरमपास्ताः, चतुर्दशशतीप्रकरणप्रासादप्रतिष्ठापटिष्ठैरेव श्रीहरिभद्रसूरिभिरेतस्या वृत्तेर्वैयावृत्त्यकरसूत्रतत्स्तुतिनियतक्रियानियामिकाया निश्चयात्, किञ्च श्रीपञ्चाशकवृत्त्यष्टकवृत्त्याद्युक्तः श्रीहरिभद्रसूरीणामङ्कोऽपि 'विरह' इत्यभिधानमयोऽत्र प्रकरणान्त्यभागे ग्रन्थोपसंहारे प्रशस्तौ चेत्येवं त्रिरुक्तः समुपलभ्यत एव, अन्यच्च—श्रीमन्तः सिद्धर्षयोऽप्येनां वृत्तिं ललितविस्तराभिधां स्वप्राक्कालीनैरनागतं मामतिशयितविज्ञानेन विज्ञाय श्रीहरिभद्रसूरिवराश्चक्रुरिति स्पष्टतममाख्यासिषुरिति उपमितिभवप्रपञ्चाकथाया आद्य एव प्रस्तावे, ततो निस्सन्दिग्धमेतद् यदुत नैते श्रीसिद्धर्षिसमानकालोद्भवाः,किन्तु प्राचीना एव ततः,अन्यच्च प्राकृतकुवलयमालाकृतो दाक्षिण्यचिह्नसूरयोऽप्यस्मार्षुरेनानभियुक्ततमान्, किञ्च श्रीमद्भिर्विहितां नन्दीसूत्रलघुविवृत्तिमनुसृत्य श्रीमतां स्पष्टं प्राभृतादीनां पूर्वगतभेदानामासन्नव्युच्छेदमभिसमीक्ष्यापि प्राचीनतमत्वमेषां न सन्देहकोटीमाटीकते। मुद्रितचरामप्येनां सपञ्जिकामधुना दुष्प्रापामवलोक्य मुद्रणमेतस्या वृत्तेर्विहितम्, सूक्ष्मटीप्पनेन चालङ्कृतैषा, तद्विमृश्यैनां यथार्थमनिशमनुतिष्ठन्तु सज्जना इति विज्ञप्य विरम्यते।

अलेख्यानन्दसाधुना ( वीरात् ) २४६० भाद्रपदासिताष्टम्यां महेशानपुरे।


॥ ३ ॥

## विषयानुक्रमः

पत्रं



॥ ४ ॥

# ललितविस्तराटीप्पनिका

पृ. १ ला. ३ भुवनालोकं—सचराचरजगदालोककं। ३ जिनोत्तमं—भावार्हन्त्यचतुरतिशययुक्तं। ४ गमाः—अर्थमार्गाः। ४ पर्यायाः उदात्ताद्या अनुवृत्तिव्यावृत्तिरूपाः। ४ कः अपलापे। ५ जातं प्रकारः समूहो वा। ५ अल्पमतिनेति न वज्रादिवदधिकमतिना श्यामलनिर्मलदीपदृष्टांतात्। ७ व्याख्यापरिश्रमसाफल्योक्तेः। ७ चैत्येति चैत्यवंदनक्रियायाः तत्र त्रस्यापि दृश्यफलाभावात् निष्फलत्वात् न तद्व्याख्यानस्य साफल्यं, न च तद्व्याख्या सफला, फलमारंभव्यापकं, परं न तत्। ७ असिद्धमिति कर्मक्षयफलकत्वात् कर्मोपादानहेतुभावविरोधात्। ८ सम्यक् अनुबन्धी भावः, विधिमत्ताज्ञापनाय विशेषणं वा। ९ क्षयः—क्षयक्षयोपशमोपशमाः। ९ आदिना सर्वकल्याणं। ९ अनाभोगः मूढचित्तं अव्यक्तता वा, मातृस्थानं माया, चलचित्तत्वादिना। ८ प्रजायते धर्मगुर्वालम्बनजातभावात् देवालंबनत्वात् प्रकर्षः। १० विपर्ययः कर्मक्षयाभावः। १० सम्यकरणं वक्ष्यमाणविधिना। ११ लब्ध्यादीति आदिना अपरिणामादि। ११ मातृस्थानं कर्मक्षयादिभिन्नेच्छा प्रायः जातिस्मृत्यादिमत्सम्यक्रियाभावात्, विधिनेति हेतौ, इत्थंभूते चेत् लब्ध्याद्यपेक्षावत्परिहारः। १२ एवेति आधिगमिकस्यान्योपायाभावात्, भाववंदनहेतुर्भक्तिरिति ज्ञापनाय वा, व्याख्याफलायाधिकृतेत्यादि, अर्थज्ञानायोपेत्यादि, लब्ध्यादिपरिहाराय आशंसेत्यादि, कर्मक्षयफलाय समेत्यादि, सूत्राद्यालंबनाय भक्तीति।

पृ. २ ला. १ सर्वत्रैव—क्रियातत्सूत्रव्याख्याश्रावणपाठेषु १। अस्य—चैत्यवन्दनसूत्रव्याख्यानस्य। २ प्रत्युत—कर्मक्षया-



॥ १ ॥

दिरूपार्थहेतुत्वे अवज्ञादिनाऽनर्थभावात्। २ पाठस्यापथ्यत्वाशंकायामहितमित्यादि । २ अनर्थ्युद्देश्यव्याख्यानस्यानुचितत्वात् असमर्थे भंगोज्झनादि भावात् विनयादिरहितस्यापरिणमनात् अर्थीत्यादि। ३ आगमोक्तमैत्र्याद्यनुगतानुष्ठानस्य धर्मत्वात् कारण इत्यादि। ४ एतदिति पाठादि,तत्कारिणश्च, उचितेति आमुष्मिकविधिरूपचैत्यवन्दनपाठादिषु। ४ कर्मणामावारकत्वान्नहीत्यादि। ५ अमीषामिति एतद्बहुमानादीनाम्। ५ बहुमानकार्यत्वाद्भावस्य भावेत्यादि। ५ अयं विधिप्रयोगः। ६ लौकिकं स्यादौचित्यं चेदाह—विषयेति, कर्मोपादानहेतुभावविरोधात्। ६ केवलैहिकौचित्येऽप्रेक्षेत्यादि। ७ व्याख्यानस्य परार्थं प्रवृत्तिः। ७ लिङ्गेऽवश्यं लिङ्गीति। ८ तत्कथाप्रीत्यादयो बहुमानस्य, गुरुविनयादयो विधिप्रयोगस्य, लोकप्रियत्वादीनि उचितवृत्तिताया लिङ्गानि, अर्थ्यादीनां च रूपान्तराणीमानि। ८ तदनुकम्पा निन्दाकारिषु दया। १४ अनुष्ठानस्य वचनमात्राधारत्वात्तद्भक्त्या लोकनाथः, लोकसंज्ञात्यागे तद्बहुमानात्

पृ. ३ ला. १ मार्गप्रवेशेऽपि तथाभावेऽतीत्यादि। २ सामर्थ्ययोगस्यातिक्रान्तत्वेऽपि न शास्त्रोक्तिविपरीतता। २ लोकनाथस्य सर्वानुभवात्। २ शिष्टसमागमाद्यभावेन शिष्टेत्यादि। ३ गुर्वित्याद्यपवादलक्षणं, सूत्राबाधा वचनोक्तमार्गेबाधा। ४ परमगुरुस्तीर्थंकरः, निन्देयुर्विरोधिनस्तमेव। ३ एतदिति क्षुद्रसत्त्वचेष्टा। ५ निरूपणीयेत्यादिषु हेतुहेतुमद्भावः। ७ महेत्यादिषु पश्चानुपूर्व्या हेतुहेतुमद्भावः, अधिकारितयेत्यध्याहारः। ८ क्षुद्राः सत्त्वा अपुनर्बन्धकात् प्राक्, शेषानर्थश्रवणात् धैर्यक्षतेः, लौकिकफलश्रेयस्तरत्वाभावात्। ११ द्वेषशङ्कायामपक्षेति, डमरुकमणिन्यायात् पूर्वत्राधिकरणेऽपि। १३ प्रणिपातदण्डकः शक्रस्तवः, आदिनमस्कारा अनियताः। १४ आदिनोपाश्रयादि। १५ साधोरुपचारासम्भव इति यथेत्यादि।



॥ २ ॥

पृ. ४ ला. १ रजोहरणेन वस्त्रप्रान्तेन वा प्रमार्जना, पञ्चाङ्गप्रणिपाताय क्षितीत्यादि। १२ वियट्टेति पृथगालापकः। १३ आदिकरत्वं साधारणं।

पृ. ५ ला. १ तद्भावः स्तोतव्यभावः। २ परार्थत्वात्-भव्यार्थत्वाद्, अतिशयादीनां तथात्वात्। ३ परेत्यादि, धर्मदानादिद्वारा। ५ सर्ववीतरागताहेतुः। ७ सिद्धौ ज्ञानाद्यक्षयात्। ७ इयमित्यन्त्या त्रिस्वरूपेति। ८ सिद्धात्मनि त्रयाणामपि मुख्यत्वात् स्तुतिरपि मुख्यवृत्त्या, स्तोतव्ये भव्ये तन्निमित्तमादिकरत्वादि अन्विष्यते ततस्तस्यापि निमित्तोपयोगादि। १० संहितेत्यादि, व्याख्याकारापेक्षया अनुगमे, तथा च शास्त्रापेक्षयोपक्रमादौ श्रोत्रपेक्षया सूत्रार्थमात्रादौ च व्याख्याङ्गभेदः। १२ प्रागधिकारित्वे क्रियाविधिः,अत्र तु व्याख्याविधिः।

पृ. ६ ला. १ प्राकृतेत्यादि भवतीति, न संस्कृते, इतिर्हेतौ,देवादीत्यादि शब्दार्थापेक्षं, कर्मघातादि तु निरुक्तापेक्षम्। २ इष्टं नमस्कारलाभः। ४ अस्य चैत्यवन्दनसूत्रस्य। ५ सम्यगिति, तथा च पढममित्यत्र सम्यक्क्रियोपयोगिज्ञानग्रहाज्ज्ञानस्य सम्यग्ज्ञानमित्येवार्थः। ५ विशिष्टेति आश्रवादिदेवादितत्त्वविषयकहेयोपादेयादिबुद्धिजनकक्षयादिगोचरेति।

पृ. ६ ला. ६ तन्त्रेति लोकोत्तरशास्त्रात्। यथार्थेति तत्त्वनिरूपकेण, न तु मूकगीतार्थेन तदाश्रितागीतार्थेन वा, स्वेति व्याप्तीतरविभागज्ञात्रा,परेति परिश्रममगणयता,पराशेति बालादिदशाज्ञायकेन, सम्येति परमशुश्रूषावद्भावेन। ७ एतेति व्याख्याऽसिद्धेर्विपरीतव्याख्यासिद्धेर्वा। ७ गोमांसाद्यन्त्यजादीनां भक्ष्यत्वस्पर्शनीयत्वे सत्यप्यनिष्टानुबन्धात्, अत्रापि मोक्षमार्गविघ्नात्। ८ मण्डेति पर्षदि स्थितो निषद्याद्वयविधाता अक्षाणां स्थापयिता ज्येष्ठवन्दकादिः, ज्येष्ठक्रमः–रत्नाधिकपरिपाटी, उच्चेति समोच्चासनवर्जनं, वीति विकथानिन्दादित्यागः। ९ तद्भावेति उपायोपेयभावः। १० रत्नेति अनु-

ष्ठानबुद्धि रत्नम्। ११ अनेति शेषबोधः, जिना गुरवश्च परमभाववैद्यास्तत्स्वरूपावगमः। १२ ज्ञानेति ज्ञानापेक्षया, संयेति क्रियापेक्षया। १४ क्रियेति क्रियावियुतज्ञानस्यानुपादेयत्वात्, अशक्ये श्रद्धानं, येति स्वमतिप्रवृत्तेर्भवाङ्गत्वात्।

पृ. ७ ला. २ न हीत्यादि, चिन्तामणियोग एव दौर्गत्यभित् तथा जिज्ञासादियोग एव दीर्घसंसारभेदी, सर्वत्र तदुद्देशेन गुरुशिष्यप्रवृत्तेर्व्याख्याङ्गताऽल्पभवस्य। ३ तस्याः साकल्यजातव्याख्यासिद्धेः। ४ दुरापत्वात्प्रार्थना, न त्वप्राप्तेः, तत्त्वधर्मः-पारमार्थिकधर्मः, प्रार्थनाबीजं सत्प्रशंसारूपत्वात्। १२ तत्प्रकर्षः भावनमस्कारप्रकर्षः। १४ प्रतिपत्तिः-निष्कषायवृत्तिः।

पृ. ८ ला. १ अद्वैतेनात्मबाहुल्यं कुतोऽर्हन्तः, नमनेन तन्निरासे विपर्येत्यादि। ३ एतद्धिति अद्वैतनिरासादि। ६ न्यायेति शास्त्रानुक्ता अपि। ६ विकलेत्यादि यथाक्रमं योगाः। ७ विकलः अतिचारवत्तया। ९ सामेति फलप्राप्त्यनन्तरहेतुः, एतत्साधनाय सिद्धेत्यादि। १२ अपूर्वात् क्षायिकभावात्।

पृ. ९ ला. १ स्वस्थानं नमो जिणाणमिति। २ नमस्कारः कारणं तरणान्त्यहेतुः कार्यं। ६ अधीत्यादि चतुर्ज्ञानकेवलयोरन्तराव्यवधानात्। ८ भावार्हन्तः भावोपकारका एव। ८ इङ्गना-संज्ञा। शुभानुबन्धिकस्याप्यपायाभावो धर्मबोधश्च भव्यानाम्। १० महेति सुरसान्निध्यमात्रस्य प्रातिहार्यत्वात्। १० रागेत्यादि प्रकृष्टं धर्मवीरत्वं। १२ सम्येति स्वरूपं, दानेति प्रवृत्तिः, सेति भेदौ, महेति मोक्षनैकट्यं। १२ एकेत्यादि छाद्मस्थ्ये, सम्विति संयोगायोगित्वे।

पृ. १० ला. १ प्रधानं प्रकृतिः, मौलिका निरीश्वराः। ३ जन्मेत्यादि, न साङ्ख्यानामात्मकृतः प्रपञ्चः, अन्ययोगव्यवच्छेदापेक्षं, अयोगव्यवच्छेदे तु श्रुतस्येति अध्याहार्यं, तस्यैवार्थात्मागमवत्त्वात्, तत्र कर्म्मणः अत्र रथन्तरादिवदकर्मणष्टः, वर्तमानतावदादित्वमनादित्वेऽपि। ३ अधीति भग-

वद्भवस्याकस्मिकत्वात्तज्जन्मपूर्वको हि भवप्रवञ्चः। ३ प्रस्तुतेत्यादि, आत्मनः कर्माणुसम्बन्धयोग्यताराहित्ये। ४ मुक्तानामपीत्यतिप्रसङ्गदर्शनं, प्रस्तुतस्य तत्तत्कर्माण्वादेः, प्रक्रान्तेति जन्मादिप्रपञ्चस्य। ६ कल्पनेति आत्मजन्मादिकायाः, द्वयाधीनो बन्ध इति न्यायः, तत्स्वभेति अबन्धस्वभावेऽपि बन्धनस्वभावस्य। ७ तत्स्वेति अलोकाकास्याबन्धस्वभावतया सम्बन्धाभावे आत्मनो बन्धस्वभावता। ८ तदेति कालादिसापेक्षतया। ९ एतदिति स्वभावमात्रस्य फलहेतुत्वं,अन्यत्रेति शास्त्रसमुच्चयानेकान्तजयपताकादिषु स्वयं। १० आगमधार्मिका —अनीश्वरवादिनः साङ्ख्या वेदान्तिनो वा। १० तन्निरासेन तन्निरासद्वारा, शरीराभावे तीर्थाकरणादचिन्त्येति, ताच्छील्याय। ११ अन्येति देशनातीर्थकरणाद्यभावे। १२ जन्मेति व्याप्तेः, मिथ्येति उन्मज्जनाभावहेतोः, महेति विक्षोभहेतोः, सुदुरिति भ्रमोत्पादात्, विचीति व्यथाकृत्त्वात्, रागेति अनन्तरेतरक्षोभहेतुः, संयोगेति सर्वावस्थाव्याप्तेः,प्रवेति इच्छातद्विषयप्राप्तेराश्वासरूपत्वात्, यथेति अनन्तज्ञानादिस्वभावेन क्रमेण सज्ज्ञानमयता यथाचारुकारिता सत्पुरुषसेविता फलप्रापकता च॥

पृ. ११ ला. १ निरेति सङ्घस्य तीर्थत्वे हेतुः। २ उद्देश्यतीर्थशब्देन सङ्घादि, द्वितीयतीर्थशब्देन तरणसाधनम्। ३ आदीति तीर्थकृत्स्वभावाय, प्रणयनं स्पष्टवाचः। ४ तदेति शरीरासम्भवात्प्रणयनासम्भवः, अनन्तरपरम्परागमवतां धर्मप्रवर्त्तकत्वात्। ३ अप्रत्ययो महेशः, अनुग्रहो दया, अनादिमुक्तिवादात्,सदाशिववादिनः। ७ तथेति आदिना कालाद्याः, प्रेति आद्यसम्यक्त्वे, उपदेशोऽपि स्वेति। ८ तीर्थेति गर्भादारभ्य कल्याणकभावात्, तद्भवीयसम्यक्त्वापेक्षं, तस्य भवान्तरागतत्वाद्, अन्यत्र चारित्रापेक्षमिदं, अन्ययोगायोगव्यवच्छेदौ पूर्ववत्। ९ योग्येति प्रधानस्वयोग्यता, कर्मण उप-





॥ ५ ॥

देशादेः, क्रिया व्यापारः,क्रिया फलदात्री, अश्वानां माषाणां स्वयोग्यताप्राधान्यात् शिक्षादि। ११ एतदभावे परम्पराहेतुभेदाभावे, तद्विशीति फलयोः॥ १२ अतदिति भगवद्भावानिर्वर्त्तनस्वभावः, तद्भेति अन्तकृद्बोधिवत्।

पृ. १२ ला. २ पुर्विति सर्वसत्त्वैवंभावेन तथात्वं,पुरीति शरीरे, सहजेति तथाभव्यत्वस्य वटबीजे वटवदङ्गीकारात्। ४ अनुशयः क्रोधः। ५ खुड्कानां स्वार्थपरादीनां, नेत्यादि जात्यरत्नवत्पुरूपोत्तमाः। ६ तद्भेदेति जात्याजात्यवत्, जात्येति अजात्यानुच्छेदेन प्रत्येकबुद्धानामजात्यरत्नत्वात्, तद्भेदेति जात्युच्छेदे, तद्भेदो जात्याजात्ययोः, मुक्तेति भव्यत्वाभावात्। ९ तदन्येति आयुपोऽन्ये पुण्यादयो, निर्देति सर्वत्रापरविशेषाभाववारणाय। १० वाह्येति स्वरूपं, वेतेति मृणालया, निरुपेति उपमां विनेव। १४ तदेति असाधारणगुणैः साधर्म्यात्, विनेयेति उपमात्रोध्याः, उक्तेति उपमेयशौर्यादीनाम्।

पृ. १३ ला. १ नित्रो निमित्तोपनिपातः कार्यः, यथेति व्यापकेऽप्यनुग्रहविधौ यथाभव्यमुपकारः प्रत्युपकारनिरपेक्षा महान्तः, अधीति प्रणिपातदण्डकः, भिन्नोऽयं शक्रस्तवात् दीनो इत्याद्यनुक्तेः, अन्येषां श्रुतधराणां। ४ अवीति स्वरूपं,अयोगः अनुरूपयोगाभावः, पुरुषस्य पुरुषेण चोपमेति पुण्डरीकाणां भिन्नजातीयत्वात्। १० यथोदितेति तद्धर्मापत्तिरूपः, एकेति कथंचित्तद्धर्मापत्तौ लिखापत्तेः, तत्त्वेति वस्तुतत्त्वस्य, न सत्त्वाभिन्नमूर्त्तत्वादि,सर्वेन सत्त्वात्,सत्त्वाभावे एव मूर्त्तत्वात् विशेषकाभावात्, अभिन्ननिमित्ते विरोधः। १३ गुणेति गुणानां क्रमवृद्धिनियमादुपमाऽपि आदौ हीना, व्यवच्छेदकं विशेषणम्। १४ पुरुषेति आदावेवोत्तमोपमा।

पृ.१४ ला. १ आदिना गौण्डीर्यत्वादि, धर्मो गुणः, गन्धहस्तिगुणं विहारपवनगन्धो वा। २ परचक्रं परराज्यसैन्योपद्रवः। ३ सर्वेत्यादि, एकाश्रयत्वादादिना पश्चानुपूर्व्यादि,




॥ ६ ॥

अमीति गुणा वाच्यानि वा। ४ अमीति क्रमाक्रमाभ्यां प्रवृत्तेरभीति वस्तु, अक्रेति कथंचिदस्ति क्रमः, अन्यथेति क्रमाक्रमोभयाभावे वस्तुन एकान्तेन क्रमिकेतरगुणाभावात्, तथा च वाच्यवाचकसम्बन्धो न। ७ आदीति तिसृष्वप्यवस्थासु। ८ अनेकेति साक्षात्पर्यायसमासतद्धितादिरूपेण, अपिद्वये आद्योऽवयववाचकत्वं द्वितीयः समुदायवाचकताऽनिवृत्तिं ख्याति। स्तवे इति, तात्त्विकगुणोक्तिप्रसङ्गात्। ९ तत्त्वेति व्युत्पत्तिपरिभाषाभ्यां, सत्त्वो जीवः, अभेति मुक्त्यर्हत्वात्। १२ तथाभव्येति तथाकालादिप्राप्यैव पाकस्वभावं, योग्येति मुक्तियोग्यताया एकरूपत्वे, तदेति कालादिभेदेन बीजादिसिद्धेरभावात्, तुल्येति सर्वेषामेकदा सहकारियोगात्, अन्येति सहकारिप्राप्तितुल्यत्वाभावे।

पृ. १५ ला. २ येषां न योगक्षेमे ते इतरे, तद्वन्तस्तथा, बीजेति सत्प्रशंसा बीजं, गोशालादिवदाश्रणीयः, महेति सर्वमहत्त्वात्, औपेति अभव्यानां दीक्षितानां प्राप्यता, एते योगक्षेमे। ९ सांख्येति, पृथ्व्यादिषु व्यवहारमापन्नोऽनादिसूक्ष्मनिगोदनिर्गतो वा, आदिनाऽव्यवहारी। १२ तत्कर्तुरिति असम्यक्प्ररूपकादेः, अनिष्टकारणमनागममित्यादि, पापहेतुप्रवृत्तिः कर्म ततो नेति, नायमिति उपचरिताहितायोगो न।

पृ. १६ ला. १ मुद्गपाचकत्वात्। ६ तदभ्युपेति देशनीयानुष्ठानं, अनेति आयव्ययदीर्घतुलना, कार्यद्वये वा गुरुलघुबन्धनिर्जरापेक्षा। ७ वस्तुस्वेति अन्धे प्रदीपवत्, तत्त्वेति व्यतिरक्तत्वायोगः। ९ तदन्येति अचैतन्यम्। १४ अयमिति दर्शनभेदः, अस्येति अभिन्नप्रकाशस्य, सः अभिन्नप्रकाशः॥

पृ. १७ ला. १ एकस्येति अन्यतमपूर्वविदः, तेनेति स्वभावेन, अपरस्येति अन्यपूर्वधरस्य, तत्तत्त्वेति अभिन्नप्रकाशत्वं, इतरे इति स्वभावकार्यभावापेक्षः, तदिति स्वभावः। २ उत्कृष्टेति अन्यान् प्रति प्रदीपत्वं, सासेति प्रद्योताद्युक्तौ, शाब्देति

तदभावे प्रद्योतकरत्वाभावात्, अन्येति योग्यार्थकक्रुत्याभावे,
असम्भेति अचेतनेषु फलाभावात्। ४ अन्येति सामान्यसर्व-
ज्ञमन्यं वा ज्ञानिनमपेक्ष्य,अपुष्केति अचेतने प्रद्योतनाभावाद्-
सदर्थता, तत्त्वेनेति ज्ञानयोग्यतास्वीकारेण। ७ अर्थत इति
भवनिर्वेदमयत्वाद्भगवतस्तदाराधनस्यैतदेव फलमिति वा,तद्-
न्येति आत्मस्वास्थ्यमन्तरेण। १० अस्मिन्निति स्वास्थ्ये,यथो-
दीति नैःश्रयसधर्मः, सन्तीति स्वास्थ्याभावे भयवति चित्ते।
११ तस्येति भयपरिणामस्य। १२ गुणेति स्वास्थ्यरूपत्वात्,
अचिन्त्येति मोक्षहेतुत्वात्, तथेति धर्महेतुतया, सर्वेति भग-
वत्स्वभावात्।

पृ. १८ ला. १ तदेति प्रकरणे, तत्त्वेति श्रद्धाजन्यज्ञानं,
इयमिति श्रद्धा, एतेति तत्त्वदर्शनम्। ३ अत्रेति श्रद्धाभावे,
तत्त्वदर्शने, निपुणेति परमार्थेन, तथेति विशिष्टविशिष्टतर-
तया, तदिति श्रद्धाफलभावः, तमेति कालं, तदिति फलं,
विशीति श्रद्धोपादानम्। ६ भुजङ्गेति न हि तस्यां किञ्चित्,
निर्गम एव किञ्चित्,परं निर्विघ्ना। स्वेति स्वाभाविकः।७ अस्मि-
न्निति क्षयोपशमविशेषे। ८ अन्येति सानुबन्धक्षयोपशमेऽसति,
क्लिष्टेति स्खलनस्य, तत्रेति मार्गे, एतदिति स्खलनम्। ९ भूय
इति पातात्, तदिति मार्गस्य, तदिति अन्तःकोटीकोटयधि-
कस्य, प्रवृत्तीति पञ्चकम्।

पृ. १९ ला. १ प्रतीति सम्यग्दृष्टीत्यादिवत्। २ एते-
षामिति तत्त्वज्ञानिशुश्रूषादीनां, वस्त्वेति पुण्यसाधकतया,
स्वार्थेति पापपरमाण्वपगमः, अन्येषामिति विविदिषारहिता-
नाम्। ४ अप्रत्येति महेशः। ५ अभक्ष्येति भक्ष्यमपि पापकृत्।
६ यथोदीति विविदिषारूपम्। ८ पश्चेति उत्पत्तिक्रमः, न्यासः
प्राधान्येन, अपुनेति अपुनर्बन्धकत्ववतस्तद्भावात्। ९ इतेति
अपुनर्बन्धकत्वपञ्चके, अनीति पुनर्बन्धकस्य, तत्त्वेति यथा-
र्थपञ्चकम्। १० उत्कृष्टेति सप्ततिकोटीकोटी, ग्रन्थीति अन्तः-





॥ ८ ॥

कोटीकोटेः, तद्रूपेति श्रद्धानं प्रशमादयः। ११ फलं ग्रन्थिभेदः, लापस्येति विश्लेषेऽपि सर्वथा विभागाभावात्। १४ प्रशेति विज्ञप्तेरप्येतानि।

पृ. २० ला. १ यथोदीति अभयादिद्वारैव लोकपुरुषोत्तमत्वाद्युपयोगात्। ४ क्रियेति अनुष्ठानमपि क्षयोपशमजं तत्कारि च, साध्विति यावत्पापपरिहारचिकीर्षुत्वात्। ६ विचीति तत्तद्द्रव्यादिः, महेति कारकभूतात्मनि योजनात्, भवेति उभयावधारणं, तत इति तदभावे तदयोग्यतैव, तदिति धर्मः। १० सिद्धेति स्वरूपं, आलुका–वार्घटी तयोर्निर्विशेषता, असदिति ज्ञानाद्यनुबन्धी, रक्षेति न कार्यं कथञ्चित् स्वपरकृतं छादनीयं,न च तत्कारकपोषस्तेषां शिक्षणीयत्वात्। १३ सूत्रेति पारत्रिकविधौ तस्यैव मानं, निमीति सन्देहपराकृतेः, यतीति तीव्रालम्बनत्वात्, विस्रोतेति स्खलना, प्रतीति प्रक्षालनादस्पर्शस्य श्रेयस्त्वात्, अनागतभये तच्छरणान्वेषणात्, एवमिति सिद्धान्तस्वीकारादिना।

पृ.२१ ला. १ निर्विति नैतच्छङ्कयाऽप्यप्रवृत्तिः। २ तद्धशीत्यादयः स्वामित्वे मूलहेतवश्चत्वारो, विधिसमेत्यादयश्च षोडशावान्तराः प्रतिहेतवः। ११ परेति श्रोता। सम्यक् प्रवर्तनाद्यस्त्रयो हेतवः। १२ परीति श्रोतृषु बाहुबल्यादिष्विव। प्रवर्त्तेति तद्योग्यहेतुः। प्रकृत्येति न पुनर्बन्धकानाम्। १३ सहकारीति लघुत्वे। अतीति सातिचारस्यातथात्वात्। प्रत्य्विति परमप्रकर्षभावात्। निर्वेति, ऐकान्तिकात्यन्तिकम्। सम्येति–सम्यक् पालनमिति। १४ कर्म्मेति अनधीनात्मत्वात्। अनीति अमूढलक्ष्यत्वात्।

पृ. २२ ला. १ स्वेति–परमपदसाधने। स्वात्मीति तन्मयताम्। भावेति अप्रतिपातिनः। तदिति सर्वेषां धर्मिणां सर्वावस्थासु क्षयोपशमवैचित्र्येण विविधतायां तथा २भव्यत्वम्। अस्थानेति आदिधार्मिकतायाः। २ अवन्ध्येति तथाभव्यत्वसा-





॥ ९ ॥

न्निध्यात् । २ कोटयः क्रयणहननपचनानि । चत्वेति सम्भ्याविद्त्वादाः, उपचाराभावे व्युत्पत्त्यन्तरम् । ६ चत्वेति चतुरोऽन्तयतीति चतुरन्तं, गतीः प्रक्रमात्, पचा( लिहा )द्यचि, व्यधिकरणापेक्षया च द्वितीयः, स्वभावरूपत्वात् । हेत्विति स्वापेक्षया । चतुरिति श्रोत्रपेक्षया । उच्छेदेनेति उच्छिदन्तीत्युच्छेदाः,पचाद्यच्,तेन भावप्रधानत्वात् तदुच्छेदकत्वेन, निर्मूलनाशेन वा । ७ भावेति शुभाध्यवसायमात्रग्रहः, न ह्यत्र रत्नत्रयधरभक्तितत्कार्यभवजुगुप्सारूपो भावः, तस्य परमपदोत्पत्तिपर्यन्तमननुधावनात् । ८ आदिना शिवादयः, द्वितीयेनाविरत्यादिः । ९ एतेनेति दानादिचतुष्कमयेन,तथेति तीर्थकृत्त्वहेतुः । ११ भगवतां विशेषेणैष एवोपयोगः । १३ सर्वत्रेति यावत्पदार्थे । १४ सर्वेति जीवस्य, अन्येति अतत्स्वभावत्वे, तत्त्वेति सर्वज्ञादेः ।

पृ. २३ ला. १ सामेति सत्त्वज्ञेयत्वादितया, विशेषेति यावद्विशेषाणां, न चेति दूरान्तरितादयः, साक्षेति अतीन्द्रियसाक्षाज्ज्ञानं, सामेति अन्यथा, सर्वेति सर्वे ज्ञानगोचराः सद्गोचरत्वात् ,साक्षेति यावद्विशेषाः। २ अतिक्रमादिति अनुमानादिभिर्विशेषानवगमात्, निरेति न स्वभाविकम्, चेति नेश्वरादिजनितं वा, प्रतीति बन्धहेतुप्रतिपक्षः, तदिति साध्यक्षज्ञानदर्शनादेः, तदिति निर्मूलम्, तदिति अजीवभेदात् । ३ ज्ञानेति स्मृतितदभावयोरुपलब्धेर्ज्ञानस्वभावता, समानायां सामग्र्यां तारतम्योपलब्धेश्च, अस्येति साक्षात्कारस्य, अवीति श्रोतृसंशयच्छेदः, स्वेति सर्वज्ञत्वम्, इत्थमिति अर्हतः सर्वज्ञत्वम् । ६ आजीवीति आजीवेन प्रकरणाच्छिल्पाजीवेन चरन्त्याजीविका मङ्क्षा इत्यर्थः । अन्यावृत्तेति तात्कालिकच्छद्मरहिताः। निकेति अवनतिः । ७ कर्म्मेति एषामेवावारकत्वात् । ८ तदिति घातिकर्म्मणाम्, योग्येति अधिकारः, अधीति प्रगल्भः, असतीति भवाधिकारः, योगेति वैद्यस्य क्षणिकत्वात्, असहेति

कर्मजा। ९ नाशीति घातिकर्मक्षयाभावे। क्षीणे इति सति च तस्मिन् अवताराभावात्, इतीति तीर्थनिकारजोऽवतारः. सदेति छद्मभावेऽपि। १० अवीति भवाधिकाररूपा, सम्भवेति जन्मनः, तदिति भवाधिकारे। ११ चेति भवावताराभावे, भव्येति सकलः, आनेति भव्यानां। १२ इष्टेति तीर्थनिकारदर्शनागतवत्, अनीति उपदेश्योपदेशकत्वाभावात्। १३ स्वेति अपायापगमज्ञानस्वरूपत्वात्। १४ कल्पीति अनिर्वाच्यत्वेऽप्यविद्याया वेदान्त पक्षेअसद् विद्यावादिन एते। जिनेति रागादीनामसत्त्वात्

पृ. २४ ला. १ रागेति 'रागद्दोसकसाये'त्यादिनिरुक्तेः।
२ येषामिति रागादीनाम्, निमीति भ्रान्तिनिमित्तोपगमे तस्य सत्त्वे कल्पितत्वसत्, इतरथाऽसती भ्रान्तिः, तथा च वास्तवो जयः। ३ निमीति नियतभ्रान्तेरभावः, तदिति भ्रान्तेः,अन्विति सदा चिन्मात्रात्,अनिर्मोक्षेति जिनत्वाभावः, तथेति चिन्मात्राद्भ्रान्तेरभ्युपगमे असत्त्वे इति चितिभ्रान्तत्वे। ४ अयमिति अनुभवः। ५ सर्वेति पुरुषेषु। अभावेतिभावादिति। ६ चरणेति मोहप्रतिपक्षत्वात्। ७ भावेति तीर्णत्वेऽप्यावर्तनात्। ८ चारीति तपसश्चारित्ररूपत्वात्, तीर्णा इति कर्त्तरि क्तः गत्यर्थत्वात्,जीवितेति उभयमपि न। ९ मरणेति विशेषणं,तदिति मुक्तेः,तदिति अत्यन्तमरणं,भवनेति आवर्तीभावः। १० तदिति मरणप्रतियोगिभवेन, मरणेति तदात्यन्तिकवियोगरूपं तत्, न्यायेति प्रागृतुपुष्पफलादीनां तत्राप्यभावात्। ११अन्येति परिणामान्तराभावेऽसति,तस्येति साम्प्रतीनस्य, अवस्थेति साम्प्रतीना,तदिति आवृत्तेः। १२ सर्वेति उपचरितत्वाभावाय तदिति मुक्तेः।१३ ज्ञानेति अस्वसंवेद्यम्, भेदैरिति विशेषाः।१४ अपरेति केवलज्ञानस्य तथात्वात् जिनानां तद्भवापेक्षया श्रुतस्यापि तथात्वात्,तत्त्वतस्तु अनुभूतिरेवंभूता, बुद्धा इति अविवक्षितकर्मत्वेन, गत्यर्थेत्यादिना कर्त्तरि क्तः, स्वेति स्वरूपमेतत्।

पृ. २५ ला. १ चोधेति अन्धोपलप्रतिविम्बाभाववत्। बुद्धेरिति ज्ञानस्य। अवेति बौधम्। उपेति आकाशे चेतनासमवायाभाववत्। अन्विति प्रत्यक्षपूर्वकत्वात्। अविशेपेति, तयाऽपि स्वविदितत्वरूपाध्यक्षाभावात्। २ तदेति अनुमानावसरे ज्ञानव्यक्तेरेवासत्त्वात्, सत्त्वे च स्वविदितत्त्वं व्यक्त्यात्मकत्वात्। तदिति घटनिरपेक्षमाद्यसमये घटत्वग्रहवत्, अनुवृत्तिबुद्धेरसत्त्वात्, धर्मिज्ञानाविनाभावित्वाद् धर्मज्ञानस्य, दर्शनं तु निराकारम्। प्रत्येति अर्थप्रत्यक्षं ज्ञात्वा प्रत्यक्षज्ञानवानहमित्यनुस्मृतेः। ३ प्रत्येति अर्थस्य प्रत्यक्षतां मुक्त्वा नार्थप्रत्यक्षता नाम, सा च स्वसंवेद्ये प्रत्यक्षे। आपेति प्रत्यक्षानुत्पत्तौ नायमीदृक्षः। विशीति प्रत्यक्षविषयवती। अप्रतीतेति प्रत्यक्षस्य। ४ रूपेति निवृत्त्याद्यपेक्षया। स्वेति अर्थप्रत्यक्षता। कारीति अर्थपरिच्छेदः। तदिति निर्वृत्त्यादिकार्यं नाध्यक्षं, अर्थप्रत्यक्षतायास्त्वध्यक्षत्वम्। परीति स्वसंविदितप्रत्यक्षाभावे च सा। ६ कर्त्रीति उपादानतया। लीनमिति भेदराहित्यम्। उक्तेति उक्तस्वरूपाः। तत्त्वेति पुनर्विघटने भेदभावात्। सङ्गेति भेदभावे। ७ कर्म्मेति जिनशब्दादिषु रागादिकर्म्मवत् कर्मापादानमत्र। कृत्येति आवरणाभावेन स्वरूपस्फूर्त्तेः। निष्ठीति अंशतो न कृतकृत्यता, भवस्थजिनादिवदिति। तदिति लयस्य साध्यत्वेन तस्य च वर्त्तमानत्वेन, जगत्करणेन वा। इच्छेति चिकीर्षात्वात्। द्वेषेति हीनादित्वात्। तदिति इच्छादि। ९ तथेति लयकरणादि। सामान्येति जगत्कर्त्तुर्बहिर्भावाभावात्। निमीति उपादानविधातृपक्षे बाधात्। अकर्तृत्वमिति स्वतन्त्रस्य कर्त्तृत्वात्। १० एकीति जगत्कर्तृजीवयोः। अन्विति स्कन्धस्य स्कन्धान्तरप्रवेशे इव। सैवेति पूर्वा। सेति युक्तम्। तदिति सत्तान्तरम्। ११ आसेति उपचेता, आपन्न आसन्नं वा प्रत्यन्तरे। नीतिरिति युक्तः। अन्येति जीवस्य। अन्येति जगत्कर्त्तरि। मोहेति विषयवन्मोहत्वात्। कटेति

दवरकबन्धवद्रोधकः। निमीति साक्षात्कर्तृत्वे रागादिप्रसङ्गात्। परेति केवलसम्यक्त्वादीनामात्मभावानामनिवृत्तेः। १२ परेति विनियोगस्यैवंरूपत्वात्। १३ ज्ञानेति महतो बुद्धिरिति नाम, तद्योगे ज्ञानमात्मनि, नित्यचिद्बुद्धियोगात्। १४ तदिति ज्ञानदर्शने,मत्त इति कथंचिद्भेदात्।

पृ. २६ ला. १ मदिति स्वोपयोगाः, भावेति निरावरणस्वभावमपेक्ष्यावरणीयतां वा, विज्ञेति तन्मयत्वात्। २ तदिति भिन्नमावारकं च, करेति तत्त्वतः स्पर्शनादीनि छाद्मस्थिकज्ञानकरणानि, स्वभावज्ञाने स्वस्यैव करणता। तदिति करणम्। ३ दुःखेति वेद्यादिहेतुत्वाज्ज्ञानाद्भेदेन वेद्यन्ते दुःखादयः। तथेति उपेक्षाबुद्धेः सुखदुःखाहेतुत्वं, सर्वज्ञस्तु परमोपेक्षावान्। तदिति आत्मा। ४ सामेति सर्वपदार्थधर्मत्वात्। ५ भेद इति आश्रयभेदः। अभीति धर्मे धर्मानङ्गीकारान्न तयोस्तदाशङ्का परस्पराशङ्का वा। १० इतीति गौरवमुख्यकृत एव भेदः,न तु ज्ञानाज्ञाने। ११ ज्ञानेति 'पर्वते वह्निः' इति 'पर्वतो वह्निमान्' इति वत्। तदुभयं, छद्मस्थानां निर्विकल्पस्यादौ भावादादौ दर्शन, केवलिनां न तथेति ज्ञानमादौ, दर्शनं तु सामान्यमुख्यकतया पारिशेष्यात्। १२ तदिति अमूर्त्तः। तत्त्वादिति अमूर्त्तत्वात्। १३ वृत्तेति अहंताऽस्मिताद्याः। तदिति महदादेः। तदिति वृत्तीनाम्। सर्वेति यावद्विषयाणां प्रतिबिम्बाभावात्सर्वविषयकमहत्त्वाभावात्। १४ तस्येति विषयग्रहणस्य। अनेकेति प्रतिबिम्बोदयो नानेकेषां युगपत्, न च सावरणानाम्। अस्येति परिणामस्य। चित्रेति परस्परविरुद्धानेकपरिणामभावः।

पृ. २७ ला. १ सङ्केति अमूर्त्तत्वात्। परीति स्वभावः। विम्बेति तदाकारमात्रतामपेक्ष्य। ३ सर्वे इति जिनेतरभेदाः। गतेति सर्वमूर्त्तसंयोगिनः। द्रव्येति षडुल्काः। तत्त्वेनेति जिनोदितत्वेन। लोकान्तेति यत्र स्थिता मुक्तास्तत्स्थानस्थाः, स्थि-

तिश्च चरमभोगायतनापेक्षा ५ स्थानमिति आश्रयः। सिद्धीति सिद्धिशिलोपरि लोकान्तम्। सिज्झंति, ऋजुसूत्रस्य व्यवहारतामपेक्ष्य, तदिति सिद्धानाम्। तिष्ठन्तीति समभिरूढः। तत्रेति विशेषणसमूहे। उपेति आध्यात्मिकाधिभौतिकाधिदैविकोपद्रवाभावात्। चलनेति पराननुवेधात्। चलेति चलनेऽनुपद्रवास्थितेः। ७ व्याधीति मूलाभावाय। ८ अनेति ज्ञानगुणतः। अक्षेति साद्यनन्तत्वात्। ९ तदिति व्याबाधाया असति वेद्यजत्वात्। भावेति सातस्यापि सान्तत्वात् परत्वाच्च, स्वाभाविकसुखमयम्। आवृत्तीति भावे। १० आवेति चतुर्गतिभ्रमणम्। निष्ठीति पिधूः संराद्धार्थः, आधारे क्तिः। प्राणीति भावप्राणवन्तः। ११ गतीति कर्मणि क्तिः। नामेति नाम्नः कोमलामन्त्रणादावपि सत्त्वात्। शागिति विशेष्यस्थानम्। स्थानेति अनन्तादिषु ज्ञानादेस्तद्वतश्च कथनात्। १२ सम्येति निगोदसूक्ष्मादिव्यवच्छेदाय। स्वरूपेति स्वरूपावस्थानरूपत्वात्। अन्तेति औदयिकनारकत्वादिवत्, न तु तत्पर्यायनाशे जीवनाशः। प्राप्तीति स्थानान्तरगतेः सिद्धत्वपरिणामाच्च, औदयिकक्रोधित्वाद्यपगमेऽकषायतादिवत्। १३ एकेति न स्थानान्तरम्। नित्येति अप्रच्युतादिरूपस्यासम्भवात्। १४ नम इति नमोऽस्त्वर्हद्भ्य इत्यतः।

पृ. २८ ला. १ नम इति परममहत्त्वोपेतत्वात्। व्यापीति यत्नतोऽनुवृत्तेः, अत्र न उक्तिर्यत्नः, योगापेक्षया तु शास्त्रयोगार्थं,प्रार्थनानुपन्यासश्च वचनानुष्ठानात् स्वयमसज्ञानुष्ठानभावात्। एत इति जिना एव। २ भवेति सर्वभयप्रधानस्य मरणभयस्य निवृत्तेस्तत्त्वत इहलोकादीनां सर्वेषां भयानां निवृत्तिः परमस्वास्थ्योपेतत्वात्। भयेति अनभिभवनीयतायां, भयसत्त्वेऽपि जितभयत्वसम्भवात् क्षपितेत्यादि। ३अद्वैतमिति अद्वैतमताभिमतानां मुक्तानामित्यर्थः,अद्वैते भयाभावात्।कल्पा इति समानाः। तेषामिति जीवानाम्। तत इति ब्रह्मणः। ४ हेतुरिति पृथग्भावे





|| १४ ||

इत्यर्थः, तथा च द्वैतम्। सेति नैवं चेदित्यध्याहार्यम्। तदिति अनन्यहेतुताऽऽसां पूर्ववदेव। सहेति अनारोपित इत्यर्थः। ५ तदिति आत्मनः। रूपेति भवनेति। ७ इहेति तदभावे न जितभयत्वम्। अशुद्धेति अशुद्धाद् ब्रह्मणः। तत्रेति अशुद्धे। विभागमिति निरवयवम्। तदिति ब्रह्म। इतीति जीवपार्थक्याभावात्। अनेकेति ब्रह्मणः। ८ क्षेत्रेति जीवात्मानः। ९ समुद्रेति अभेदाय। आदीति आदिना सहेतुकत्वादि। युक्त्येति युक्त्यतीतत्वात्। इन्द्रीति तदेवाह। १० प्रयोजेति फलम्। तथेति अनुभवात्। एवेति इष्टेश्च। ११ तदिति कूपपतितोद्धारवत्। शेपेति पतनहेतुचिन्तनादि। द्वैतेति ब्रह्मापेक्षयाऽभावेऽपि जीवात्मापेक्षया भावात्। एतेति आत्मपार्थक्यात्। श्रद्धेति वर्णसत्त्वासत्त्वयोः, वचनमात्रसाध्यत्वाभिधानाद्युक्तिगम्यत्वनिषेधाच्च। दृष्टेति वचनस्यापि परीक्ष्यत्वम्। १२ वचनेति आगमत्वात्, श्रद्धामात्रगम्यं न। अन्येति दृष्टेष्टविरोधे, एकत्वे सुखादिपार्थक्यस्य दृष्टस्येष्टस्य च स्वकृतभोगित्वस्य बाधात्। तत इति बाधितागमात्। असिद्धेरिति विश्वासाभावात्। वचनेति अपरीक्षितवचनाभ्युपगमे। दुरिति विचारणमन्तरा। अपरेति सर्ववचनानां प्रवर्त्तकत्वेऽनभिप्रेतस्य। १४ वचनेति यदृच्छयाऽन्यतमवचनस्वीकृतौ। तदिति अनभ्युपगतस्य। नेति इष्टस्य प्रवृत्तिमात्रोपयोगित्वे। अवेति अनङ्गीकुर्वन्।

पृ. २९ ला. १ वेति अभीष्टबाधकम्। नेति अनभ्युपगतस्य दुष्टत्वे। विचेति निर्णयानुकूलः। २ उदेति नार्थसाधकम्। न्यायेति पतितत्त्वविचारेणैवोद्धारप्रवृत्तेः। तदिति मत्स्यदर्दुरादेः। तथेति उद्धरणम्। दोपेति मरणाद्दुःखाच्च। अशक्येति बहूनामधस्तले च भावात्। ३ प्रयासेति, गालनशोपादिपु। उपायेति उत्तारणम्। इहेति पतितोद्धारे। दैवेति, उद्धारस्य विचारणीयत्वे। ४ दैवेति, अशीभवनस्याविषयतावत् तदुद्धरणविचारोऽपि दैवायत्तत्वात् अतीन्द्रियहेतुकः। शकुनेति





॥ १५ ॥

उद्धरणप्रयत्ने। इतेति अंशीभवने। यथेति शास्त्रोक्तम्। ५ परीति कषादि। शुद्धीति न निर्विचारम्। आगेति श्रद्धानुसारी। अन्विति युक्त्यनुसारी। अभ्यासेति अतीन्द्रियदर्शी। तत्त्वमिति सहेतुकप्रज्ञाभावं तत्त्वज्ञानम्। ६ आगेति केवलान्तस्यागमत्वात्। दृष्टीति ज्ञानम्। सद्भेति तत्त्वज्ञानाय। आगेति शाब्दागमलक्षणम्। ७ तदिति दृष्टेष्टाव्याहतत्वेन। वाक्येति अविरुद्धवाक्यवक्तारः। ८ अन्येति यत्तद्वाक्याभ्युपगमे। तयेति उपपत्त्या। तदिति प्रमाणत्वम्। ९बह्विति अद्वैतनिरासेन। विषयेति जात्याऽनिर्देशे। आशयेति बहूनां गुणवतां ज्ञानात्। ९ एकेति नमस्कृत्या। १० अनेकेति अनेकजिनानाम्। आशयेति क्रियैव स्यात्। इयेति स्फातिः। विवेकेति समानगुणयुक्तधारणम्। ११ अल्पेति अनेकलक्ष्यभावात्। क्रियेति अनेकानामेकवचनप्रयोगवत्। रत्नेति जिना रत्नानि। १२ हेत्विति धारणास्तुतिरूपे। १३ अन्विति वचनवत्तदुपभोगाभावात्। तदिति उपकाराभावे। १४ तदिति बहूनामर्हतां, अनेकज्योतिरालम्बनदृष्टेः स्पष्टं दर्शनोपलम्भः। तदिति बह्वर्हताम्। तदिति शुद्धचित्तस्य। तथेति आलम्बनीयस्योपकाराभावेऽप्यालम्बकस्येष्टसिद्धेः। कथमिति पूज्यानामुपकारभावेऽपि।

पृ. ३० ला. १ अस्तीति वैयावृत्त्यादावपि। २ अन्विति व्यक्तिं गौणीकृत्य गुणांश्च प्रधानीकृत्य तद्द्वारा तद्वतां सर्वेषां पूज्यभावेन चित्तोदारताभावात्। अन्येषामिति इतरव्यक्तीनाम्। सङ्गेति सर्वक्षेत्रसर्वकालीनसङ्घानां पूजाभावात्। अयेति तत्तत्क्षेत्रादिगतसङ्घपूजायां तत्पूजकस्य। अपेति अन्यसाध्वाद्यागमात्। ३ लिङ्गेति दातुः। आत्मनि स्तोत्रकर्त्तरि। गुर्विति तत्तुल्यगुणानां ग्रहात्। ४ कुशेति मोक्षानुकूलानुष्ठानकृत्। सूक्ष्मेति गुणतदाधारचिन्ता। अतीति गुणपूजावताम्। प्रधानेति सर्वज्ञत्वादिभावात्। प्रधेति शिवादिस्थानप्राप्तेः। अभेति जितभयत्वात्। ६ स्तोतेति स्तुतिगोचरा-

णामर्हत्त्वादिदर्शनपूर्वकनमस्कारा त्। असाधेति आदिकरत्वादि। ८ एते इति विदुषः। तदिति पुरुषोत्तमत्वादीनाम्। ९ तदिति लोकोत्तमत्वादीनाम्। १० विश्वेति विशुद्धेर्निपुणारम्भः। तदिति अभयदानादेः। ११ तदिति धर्मदयादीनाम्। १२ तदिति अप्रतिहतज्ञानादेः। तदिति जिनजापकादीनाम्। १३ तदिति सर्वज्ञादीनाम्। १४ एते इति अर्हन्तः।

पृ. २१ ला. १ नीतीति प्राप्तेः। तदिति स्तोतव्यादीनाम्। आक्षेपेति स्थापनानुकूल्येन। चेति निःश्रेयसहेतुतासमुच्चयाय। अयमिति चित्रसम्पद्दण्डकरूपः। २ अन्येति एकानेकस्वभावाभावे। एता इति सम्पदः। वस्त्विति स्वरूपापेक्षया तथात्वेऽपि मन्दप्रतिपत्त्यर्थम्। ३ पूर्वेति दैशिकं श्लाघाकृतं वा पौर्वापर्यम्। सयेति द्वाद्वाः।४ लब्धेति मुधा प्राप्तः। हतेति छिद्रवदादि। घटेति समानजातीयापेतनस्वबाह्यरूपापेक्षम्। चेति एकानेकस्वभावता। चित्रेति दृष्टेष्टत्वात्। तदिति अनेकस्वभावः।५ वासेति घटादावभावात्। अथेति भेदव्यवहारः। तासामिति भिन्नवासनानाम्। निवेति भिन्नरूपम्। तत इति पदार्थात्। ता इति भिन्ना वासनाः। जातीति रूपरसादीनां जातिभेदान्नैकस्मादपरवासनेति नानेकस्वभावत्वम्। ६ तदिति नीलादेः। वाङिति तत्तत्पीतादीनाम्। युक्तेति भेदेऽपि पीतत्वादेरनेकस्वभाततभावात्। ७ पीतेति स्वभावभेदाभ्युपगमात्, अनेकस्वभावतामन्तरेणैकस्मिन्ननेकव्यवहाराभावात्। अत्रेति पुत्रादिव्यवहारे। एकेति पुत्रादेः। ८ नेति नाध्यक्षेऽनुपपन्नम्। चेति चाभ्युपगमः। एवमिति दर्शनवत्। अयमिति विरोधः। १० उपेति नीलादौ। निमीति पुत्रादौ। अनेकेति एकान्तताहानेः। ११ केषामिति फलानाम्। एकेति स्वभावस्य। एके तीफले। तदिति अनेकस्वभावः। १२ एतेति अनेकान्तजयपताकायाम्। एकमिति फलम्। भवेदिति एकस्वभावत्वे। भूती समानत्वात्पदार्थस्यति। तदिति तद्धेतुत्ववत्।१३

अन्येति अन्यजननस्वभावम्। एवमिति तज्जननस्वभावं प्रथेति तद्धेतुमन्तम्। १४ निर्विति आरोपे यथार्थशुभभावाद्यभावात्। सर्वेति शुभभावकर्म्मक्षयसर्वकल्याणानाम्। प्रणीति दीवो इत्यादिपदयुतः शक्रकृतः स्तवः गणधरकृतस्त्वयं, प्रश्चाङ्गप्रणिपाते भणनात् प्रणिपातदण्डकः, पर्यङ्कासनेनेति प्रार्थनापरत्वाद्वा। तदिति प्रणिपातसूत्रम्

पृ. ३२ ला. १ उदीति सूत्रप्रस्तावनाभिहितविधिना। आदिति पौपधिकासनग्रहः। २ यथेति असद्भूतगुणकीर्त्तनस्य भयङ्करत्वात्। गुणेति आलम्बनीयविषयकशुभभावस्य हेतवः। दुष्टेति गुणिनां कुविन्दतादिवत्। ग्रेति न कटुग्राम्यादयः। ३ परीति श्रोतॄणाम्। सदिति यथार्हम्। परीति मालवादिरागेण। ४ सम्येति क्रियाविशेषणम्। प्रवेशेति गुरुतरध्वन्यकरणात्। दंशेति भगवद्गतचित्तत्वात्। येगेति 'अन्नोऽन्नंतरिअंगुलिकोसागारेहिं दोहिं हत्थेहिं'। ५ तुल्येति उपसर्गहरादिवत्। तदिति पठ्यमानम्। तदिति स्वस्तोत्रात्। ६ येगेति शुभचित्तलाभः। अत्रेति स्थानादिगतचितेन पाठे। ज्ञातेति तादृग्विधानानुपलब्धेः। ७ तदिति अङ्गपाठस्य। अभेति अङ्गपाठेन। ८ बाह्येति अनुद्देश्यत्वात्। ९ पुर्विति तदङ्गाः। तदिति आगमस्य। अन्येति सर्वदर्शनेषु भावात्। प्रतीति कायोत्सर्गरूपा। पश्चेति क्षमाश्रमणदानात्। १० अभीति 'जावंते' त्यादिना। आचेति श्रुतस्तवे जिननमस्कारवत्। सेति नान्दीपाठकवत्।

पृ. ३३ ला. १ वन्देति प्रतिपत्तेर्वन्दनारूपत्वात्। इतेति एतत्पाठमन्तरोत्सर्गे। २ अन्विति अङ्गक्रिया। आस्थेति कर्त्तव्यताबुद्धिः। आदीति अन्येऽतिशया देशनाकालीनाः। प्रतीति चैत्यशब्दस्य प्रतिमायां रूढत्वाद् व्यत्ययः, अन्यथा जिनौकांसि। ७ चैत्येति प्रतिमानां स्वयंफलाहेतुत्वाद्वन्दनाद्येव तद्धेतुः। १३ वचेति आवश्यकनिर्युक्तेः। तत्रेति द्रव्यस्तवे परमार्थबुद्धेः। १४ विपेति साधोरधिकाराभावात्, इतरस्य


॥ १८ ॥

स्वयं कृतेः।

पृ. ३४ ला. १ सामेति त्रिकरणेन। प्रमोदेति श्लाघानुमतिः। २ इदेति पूजादि। अन्विति दानानुमत्याऽऽरम्भपरिग्रहाननुमतिवत्तैवमारम्भाद्यनुमतिः, तत्र त्यागांशवदत्र भक्त्यंशस्य श्लाघा, प्रशस्तेतरधर्मानुमोदनप्रसङ्गे तु क्षीणमोहं सिद्धं वा मुक्त्वा सर्वत्र श्लाघायां दोषभावापत्तेः। ४ दोपेति असदारम्भादि। प्रयोजेति कर्तुः। तथेति असदारम्भानिवृत्तेः। उपेति विरतेर्निरालम्बनतायाश्च। ५ भावेति स्वरूपसावद्यत्वात्। इत्थेति कारणानुमतिवत्। वचेति एतस्येवान्यस्यापि वाचकादेः। अन्येति प्रकृतसूत्रदेशनयोः। ६ सन्तोपः सर्वतोभद्राध्यवसायात्। तदिति श्रावकः। तथेति पूजाद्यसन्तोषः। ७ देशेति अविरतस्तु स्यादेव। प्रवृत्तीति पूजादेः। सदेति सर्वनिवृत्तिरूपत्वात्। ८ औचीति औचित्यं चाज्ञामृतं चेति। अन्येति सर्वविरत्यभिलाषाभावे। अयोगेति कारणमूलद्रव्यस्तवायोगात्।

तथेति अकारणस्यापि तथात्वे। ९ तस्येति सर्वविरत्यहेतुकस्य। औचीति जिनबहुमानरूपः। अल्पेति सिद्ध्यभिलापात्। १० अयमिति आज्ञाऽमृतहीनोऽपि, तत्पापस्यैव पूजाकाले व्यपोहात्, इतरस्य तु क्रियाकाल एव, विपाककालस्तु तदर्थमन्यायकृतः। हेतेति औचित्यरूपम्। अनीति आज्ञामृताप्तिमन्तरा। इष्टेति आरम्भनिवृत्तिः। स्थाने पूजायाम्। १२ मानेति सत्कारात् प्राक् तद्भावात्।

पृ. ३५ ला. ४ अक्षेपेति अतः क्षायिके दर्शनदृष्टी। ७ चेतेति रुचिरूपा क्रियायां नोपयोगिनी साक्षात्। तत्त्वेति ज्ञेयहेयोपादेयविभागानुसारी। समेति अतत्त्वतत्त्वादिविषयः। आदीति आदिना कर्मतच्छेदननित्यजीवमोक्षतदुपायादि। चित्तेति स्यादेवापनयनम्। ९ सम्येति जलाच्छतावत्। १० ग्रन्थेति परलोकविधौ वचनमानत्वात्। ११ पापेति चिन्तादिकालुष्यापादकभौमाद्यरुचिः। महेति प्रशमः। परीति विनयाविनया-




॥ १९ ॥

विनयादिगुणदोषबोधात्। १२ भेयेति पटुपरिणामः। १४ धीरेति दैन्यादिराहित्यात्।

पृ. ३६ ला. १ जिनेति मोक्षहेतुः। २ संसेति दौर्गत्योपमः। उत्तेति निःश्रेयसम्। ३ आदीति वासनास्मृती। ४ आन्विति यथालभ्यम्। ५ आदीति आदिना वर्णार्थालम्बनानि। ६ पुष्टीति-पुष्टिः पुण्योपचयः। अभ्येति पुनः पुनः प्रवृत्तिः। ७ सम्प्रेति प्रतीतिरूपः। १० प्रतीति प्रतिपत्तिरभ्युपगमः। आदीति अवश्यकयोगत्रयम्। ११ स्थैर्येति विपक्षचिन्तारहितं यमपालनम्। सिद्धीति परार्थसाधकम्। उच्चेति अवस्थारूपाणाम्। उपेति श्रद्धाराहित्यम्। १२ एतेति उपधाशुद्धिमान्। अस्येति कायोत्सर्गस्य। १३धृतीति अनाकुलता।

पृ. ३७ ला.३ अतेति श्रद्धादिविकलस्य। ४ भेगेति अलक्ष्याः। एत इति श्रद्धादयः। ५ शमेति क्रमवृद्धम्। ६ इहेति श्रद्धादिप्राप्तौ। ७ यदिति शास्त्रनिरपेक्षम्। द्वेषीति मूलमेतन्मृषावादस्य। ९ अन्येति गुणानुरागिणः। ११ प्रेक्षेति गुणाद्वेषिणमिति तत्त्वम्। तिष्ठेति अभ्युपगच्छति।

पृ. ३८ ला. ७ गमेति उपयोगे निरोद्धव्यः, पश्चाल्लक्ष्यैः। सदिति आहारपरिणामशरीरादिहेतुभिः। सश्चेति निरुत्सायामपि भवद्भिः। 'आई'ति निर्युक्त्यपेक्षोऽयमादिशब्दः। ९ ज्योतिरिति प्रकाशेन। यत्रेति प्रस्थापनादौ। अपठेति अपठित्वा पारयत इत्यर्थः, गुरुपारणं यावदवस्थानात्। १२ स इति भङ्गः। अत्रेति आकारे सति इति। एतेति आद्याकारैर्ज्योतिःस्पर्शे कल्पग्रहणमित्यादि। १३ आग्रहीति प्रतिज्ञाप्रारम्भादौ। १४ सर्वेति स्थानादिकमन्तरेण सर्वव्यापारत्यागरूपः। आकेति भग्नापेक्षया तृतीया, विद्यमानैरप्याकारैरभग्न इत्यर्थः, न चेतः सप्तमी। विरेति स्वार्थे णिजन्तः।

पृ. ३९ ला. १ भूयेति कायोत्सर्गस्याशंस्यत्वात्। २ अतीति सर्वथा कायोत्सर्गे एतद्विधा अप्यतिचाराः, तद्भवनस्याप्यवश्यं





॥ २० ॥

भावज्ञानान्नानाभोगादिरूपाः, न च निरोधनीयाः, मरणादि-
भावापत्तेः। बद्धेति पर्याप्तत्वे। ३ उद्वेति विकारकरणेनास-
माधेः। ४ मात्रेति निरोधबुद्धावप्यनिरोधात्। ५ निःश्रेयेति
सातिचारस्य साश्रवत्वेन पुण्यहेतुत्वात्। ६ 'वये'ति आका-
शानिच्छापेक्षया। लाघेति जीवनापेक्षया। ८ उक्तेति गुरु-
लाघवालोचनात्, आगेति अभिष्वङ्गाभावे हेतुः। ९ अर्थेति
विराधनायाः। ११ 'अई'ति अविधिमरणात्। विसोहीति प्रा-
यश्चित्तादिना, तथा च मूलापत्तिरक्षणाय पातेऽपि न विरा-
धना। ११ 'ये'ति भवान्तरादिना।

पृ. ४० ला. ३ प्रलेति ऊर्ध्वस्थानविधिः। ४ प्रमेति
अन्यकृतापलापपरत्वात्। वचेति अशठागीतार्थाचरणाया आ-
ज्ञात्वरूपम्। विद्येति अगीतार्थाचरणम्। ५ पूर्वेति आचरणा-
भ्युपगमात्। उदिति अनुक्तत्वात्। अनेति क्रियादर्शनात्।
अन्तेति कायत्यागाभावे। ७ वन्देति सत्कारप्रत्ययादिवत्।
अतेति प्रत्ययादिशब्दाभावात्। कायेति तत्सूत्रोच्चारणपूर्वकम्।
८ मात्रेति न मानम्। प्रमेति अभिभवाभावे परिशेषेण चेष्टा-
त्वात्। प्रकेति तृतीयभेदाभावात्। १० एकेति उपसर्गप्रस-
ङ्गात्। ११ उक्तेति अष्टोच्छ्वासाः। १२ अत्रेति जीतकल्पे।
अयमिति वन्दनोत्सर्गः। आदीति 'पडिकमणमादी' त्युक्तः।
उपेति भाष्यादावनुक्तेः। १४ अनीति वादी।

ला. ४१ पृ. २ समेति वादी। ४ आचेति वर्त्तमाने।
श्रवेति पूर्वम्। एवमिति प्रलम्बितभुजत्वमात्रम्। ५ एतदिति
अष्टोच्छ्वासमानोत्सर्गकरणम्। विरोधेति असावद्यहेतूपलक्षणम्।
६ भावेति भगवतीयोगे पारिष्ठापनिक्युच्चारेऽपि तदनुपयोगवत्।
निवेति अमानप्रलम्बभुजत्वस्य। ८ वेति यथापरिणामेन
ध्येयमिति सम्बन्धः। एतेति गुणादिध्यानम्। विद्येति भाव-
नासारम्। ९ तदिति नमस्काराद्यनुच्चारेऽपि। अत इति कायो-
त्सर्गात्। कर्म्मेति कुशलानुबन्धि। १० एतेति विद्याजन्मबीज-

त्वम्। अपीति आस्तां स्थानादावित्यपेरर्थः। १३ इतेति मोह-विषये। इतेति अतत्त्वज्ञः। सर्वेति बाह्याभ्यन्तरयोः। १४ अवेति गुणादिध्येयतारूपम्।

पृ. ४२ ला. १ स्तुतिमिति चूलिकास्तुतीनामनैयत्यान्न व्याख्या, परं नियमेन क्रियेति, तथा च पूर्वधरकालीनास्ताः। प्रतीति 'जीवे'त्यादि पाठात्। नमेति नतेः प्रतिज्ञा चेत्। अन्येति प्रतिज्ञायां रूढ्यनङ्गीकारे। २ अपीति पर्यायस्यापि। तथेति मन्त्राक्षराणामपर्यायाणामुच्चारात्। एकेति नान्यसूत्रवदनुभाषा। तिष्ठेति प्रतिक्रमणान्त्यस्तुतिवत्सम्भूय। ४ शोभेति सन्निहितस्तुतेः। तस्येति सन्निहितस्य। तत इति स्तुतिसमाप्तौ। नमस्केति पृथक् पारणम्। ६ एकेति स्तोतृसमाने। ९ भेदेति असमासो ज्ञापकम्। १० भावेति कर्मसाधनः। गृह्येति तथा चाकाशास्तिकायमयोऽलोकोऽपि, अन्यत्र धर्मादिमत् क्षेत्रं सः। करेति ताच्छील्येटः परिणतिः। ११ केवेति आत्मनः। दीपेति परान्। १२ धर्मेति सम्यग्दर्शनादिरूपो दानादिप्रवृत्तिसिमयो वा। शुभेति व्यवहारतो देवलोकस्य शुभत्वात्। १३ धर्मेति सम्यक्त्वादिः। प्रधेति दानादि।

पृ. ४३ ला. १ भावेति तुल्यगुणतया। अन्येति अतीतानागतानां वर्त्तमानानां च। ३ तदिति लोकदेशः। अवेति मनोज्ञानिनां मनोमात्रग्रहणात्। विभेति अतीन्द्रियज्ञानात्। चन्द्रेति दूरमपि प्रकाशात्। ५ सुधीति अनिष्क्रयम्। धर्म्मेति लोकानां धर्म्मबुद्धेः। अवेति पद्यादि। ६ अतीति सम्यग्दृशां तु तत्र न लेशतोऽपि धर्म्मबुद्धिः। ७ उक्तेति भवावतारेणाजिनेषु। ९ निकेति तीर्थावनतिनाशोपद्रवाः। बीजेति कर्म। १० अज्ञेति अन्वयाय। ११ दग्धेति व्यतिरेकाय। १३ इवेति तेषां स्तुत्यत्वेऽपि नात्राधिकार इत्येवेति। व्युदेति तीर्थकरत्वाभावात्।

पृ. ४४ ला. १ 'विशे' इति गुणानां महत्त्वेऽङ्गीकृतेऽपि गुणिनां तथाऽनङ्गीकारस्य मिथ्यात्वाद्विशेष्योक्तिः। २ आदिति


॥ २२ ॥

केवलनामाद्यर्हद्व्युदासः। भावेति समस्तापेक्षया। ४ इतीति इत्यादिवदिति। ५ अर्हेति जगद्बोधरूपफलपाकानुकूलतीर्थकरनामोदयस्य केवलित्वे भावात्। ६ नियेति अर्हतां सिद्धेऽपि केवलित्वे तदुक्तेः। ८ अग्रेति प्रसक्तप्रदेशप्रतिषेधपरमिदं प्रशमरतौ। १० केवेति सम्पूर्णश्रुताद्यपेक्षं केवलत्वम्। एवेति तेऽपि स्तुत्याः। प्रतीति प्रतिक्षेपस्त्वनधिकारात्। ११ एतेति विशेषस्य विभापकवार्तिककरगोचरत्वात्।

पृ. ४५ ला. २ ग्रन्थेति निर्युक्त्यनुगमस्य सूत्रार्थादनुभावात् पूर्वं व्याख्यातत्वाद्वा। ४ 'विदु' इति, नामस्तवेऽपि भूतभावताया वर्त्तमानसिद्धतायाश्च प्रतिपत्तिः। ५ स्वेति सान्वर्थप्रशस्तैः। ६ विध्विति अवश्यं सिद्धिं प्राप्तेः प्राप्स्यमानत्वाद्वा। ७ इतीति श्लिष्टवुद्धेः। मलेति गाढबन्धत्वात्, रज इति अस्थिरत्वात्। ८ कारेति रजोमलौ। ९ अपीति उपक्रमे तदुक्तेः। १० पूर्वेति प्रथमगाथोक्तेन तीर्थकरपदेन। ११ आशमिति अभिष्वङ्गस्य मोक्षविघ्नत्वात्। १२ निरिति डित्थादिषचोवत्। अयथेति अरागद्वेषत्वात्। १३ अप्रसेति अप्राप्तत्वाद्विधेर्द्वेषो ह्यप्रसादः। तथेति औदासीन्यव्यपोहाय। भाव्येति प्रसन्नेऽपि देवनृपादौ तथोक्तेः। १४ उक्ताविति अक्षीणद्वेषत्वम्। धर्म्मेति प्रशंसायाः। आक्रोशेति सद्वेषत्वध्वनेः। अभीति द्वेषानुक्तावपि।

पृ. ४६ ला. १ वचेति व्याजस्तुतिरूपः। वचेति उत्तरमितः। अयेति स्तवस्य। २ उपेति निष्कामस्य निरर्थकत्वाभावात्, सप्रयोजने स्तुत्यस्य तथाऽभावेऽपि स्तोतुस्तथाफलदर्शनात्। भगेति जातफले हेतुतारोपात्। स्वेति स्तवः। ७ तदिति स्तवः। ९ स्वेति सान्वर्थैः। १० इतीति ऊर्ध्वार्थ उत्, नोपसर्गोऽयं, क्रियासम्बन्धाभावात्। ११ पुनः इति सो लोपाभावात्। सिद्धेति निरुक्तेः। १२ आरोग्यमिति अरुजेत्युक्तेः। १४ समेति निदानपरिहारेण।

पृ. ४७ ला. १ तारेति षष्ठादाद्वादशं भेदात्। २ उत्केति




॥ २३ ॥

ऐकान्तिकात्यन्तिकम्। आहेति इच्छापूर्वकत्वाद्दानप्रार्थनायाः सा च निदानमिति। ३ सेति फलवन्नवेति। तथेति अप्रार्थनेऽपि दानप्रार्थनानैरर्थक्यम्, तत्पूर्वकदाने रागादिमत्ता। ४ निदेति मोहसद्भावात्। ५ तन्त्रेति देशविरतिनिष्कुटुम्बत्वयोरपि मोहत्वात्। दानेति निष्कुटुम्बत्वादेः। मोहेति आत्मवीर्यगोपनादिहेतुत्वात्। प्रार्थेति द्रव्यस्तवरूपधर्मभावात्। ६ एवेति ऋद्ध्यभिष्वङ्गे निदानतोक्तेः। एतेति तीर्थकृत्त्वनिदानम्। इच्छेति जिनधर्मेच्छायाः। तदिति जिनत्वाप्तेः। तदिति ऋद्धेः। ७ इतेति सत्त्वसंसारनिस्तारे। एतेति ऋद्ध्यभिष्वङ्गि जिनत्वम्। महेति प्रतिबन्धः। अवीति अभिष्वङ्गेतरफलाज्ञता। पृथेति अविशेषज्ञानाम्। सिद्धेति अभिष्वङ्गानर्थकत्वम्। व्यवेति साभिष्वङ्गेतरत्वम्। भाज्येति समाधिप्रार्थनम्। चत्विति भावेऽपि। १३ प्रयेति साक्षात्। वागिति भक्तिपूर्वकवचसः। प्रवेति मार्गप्रणयनरूपेणोपकारमाश्रित्य स्तुतेः। सच्चेति सन्निहिततदाराधनादेतल्लाभात्। सत्त्वेति वरसमाधेः। तदिति आराधनम्।

पृ ४८ ला. ४ गाम्भीति समुद्रस्य द्रव्यगाम्भीर्यात्, भावस्य तु तत्रासम्भवः। ६ कृतेति कर्मादिसिद्धापोहाय। १० चत्विति अलोके अकाशातिरिक्तानामभावात्, तथा च योगरूढः। १२ तथेति त्रैलोक्ये चैत्यसम्भवार्थम्। १४ तदिति समाधिदानगुणाः।

पृ ४९ ला. १ एवेति असङ्गतत्वेऽपि। एतेति कार्योत्सर्गोद्देश्यभिन्नस्तुतौ। अन्येति सूत्रादौ। तथेति उद्देशक्रमभिन्नपाठे। ३ पदेति गौणतया श्रुतस्तवत्वम्, आदानीयपदेन तु पुष्करेति। ४ अभीति चतुर्विंशतिस्तवस्य मुख्यत्वात्तेनैव। ५ 'संडे इति, 'पण्डः कानन इड्वरे' इतिवचनात् पण्डस्य संडे इति, खण्ड इति तु व्याख्यायां। ९ महेति यथासत्त्या तु जम्बूद्वीपादिक्रमः। ऐरेति आद्ययोः समत्वात्। एकेति 'सुपां सुप' इत्युक्तेः। १० निर्वेति व्युत्पत्तिः, धृगो धागश्च ग्रहा-


॥ २४ ॥

न्निरुक्तिः । ११ अधीति चारित्रस्य धर्मसारतायां निर्देक्ष्यमानत्वात् । १२ प्रस्त्विति, सम्बन्धे तथोक्तेः । अन्येति तीर्थकराभावे, तदिति श्रुतस्य । १३ एतेति, जिनप्रभवत्वेन श्रुतानामुक्तेः । यथेति अलभ्योऽयं धर्मसारः श्रीहरिभद्रप्रणीतः, श्रीमलयगिरिभिर्विवृतश्च स इति ज्ञायते नन्दीवृत्तेः । १४ अन्विति वदतो व्याघाताद् । स्वेति उक्तत्वखण्डनात् ।

पृ. ५० ला. १ अस्येति वचनस्य । एतेति पुरुषस्य । तदिति वचनम् । उपेति तथा चानुपसंहारिता, व्याप्त्यग्रहश्च। उपेति, आकाशगिरादौ । वक्रेति देवादेः । २ तदिति अदृश्यस्य वक्तुराशङ्कायाः। इन्द्रीति निर्वृत्तिस्तद्दर्शिनः,एवं चातीन्द्रियार्थवेदिसिद्धिः, न च सा मीमांसकसंमता । अन्येति अतीन्द्रियार्थवेदिनं विना । अयोगेति निवृत्त्ययोगात् । पुनेति सर्वज्ञानाभ्युपगमे । सर्वेति तीर्थकृतः। ६ तदिति जिनानाम् । तदिति श्रुतस्य । ४ तथेति अपौरुषेयस्य । एकेति जिनस्य । अपीति प्रवचनपूर्वकत्वात् । न्यायेति शास्त्रमाश्रित्य । शुद्धेति एकस्यापि सम्भवेऽपौरुषेयत्वसिद्धिः, निर्विशेषात् । अनेति जिनानां श्रुतानां च । ५ तथेति अपौरुषेयत्वस्य । तदिति जिनश्रुतयोस्तद्भावभवनतदुक्तत्वाभ्याम्। तदिति जिनश्रुतयोः। अङ्किति, परस्परपूर्वकत्वेऽप्यहेतुकत्वाभावात् । ६ वचेति वीजपूर्वकत्ववदङ्कुरस्य । अस्येति श्रुतस्य । ७ स इति सर्वेषां जिनानां श्रुतपूर्वकत्वात् । नीतीति पर्यालोचनया । यत्नेति प्रवाहदृष्ट्या। ९ तथेति केवलहेतुकबोधरूपश्रुतसिद्धेः। तदिति श्रुतपूर्वकत्वम् । १० संवेति अवचनज्ञातार्थशब्दयोः। व्यक्तीति प्रवाहेण त्विष्टा । तथेति अर्थज्ञानशब्दानामन्यतमवत्तया। ११ अन्येति सर्वज्ञसिद्धिधर्मसङ्ग्रहण्यादिषु। १४ अस्य श्रुतस्य।

पृ. ५१ ला. २ सुरेति पुस्तकरत्नपूजायाः श्रुतकृतां गणधराणां चार्चायाः । ३ पष्ठीति सयुक्तिकस्य भाषते इति



॥ २५ ॥

यथा। माहेति अध्याहार्यं कर्म्म। वन्देति भावे क्विं विधाय प्रत्ययः। ४ जालेति अज्ञाननाशेऽपि दर्शनमोहादि। ५ द्वारेति तत्सारे प्रमादपरिहारद्वारेण। ९ अन्विति व्याख्येयव्याख्ययोरिवादेश्यादेशयोरैक्यात्।

पृ.५२ ला.१अन्वेति अनुबन्धि। ९ 'दये'ति ज्ञानजन्यत्वाद्याजनकस्यैव ज्ञानत्वात्वाद् दयाया जीवाजीवज्ञानाद्भावात्। ११अस्विति 'संडे' स्थाने यथा खण्डे तथा मर्त्यस्थाने मनुष्येति। अनर्थेति अभिभवार्थस्य जेः सकर्मकत्वात्। धर्म्मेति चारित्रधर्म उत्तरः फलरूपो यस्य। १३ उक्तमिति आवश्यकनिर्युक्तौ। आशंसेति ज्ञानवृद्धयाशंसा नाशंसा मोक्षहेतुतया तदाशंसनात्।

पृ. ५३ ला. १ फलमिति मोक्षः। सद्धेति अनाशंसा वृद्धिभावात्। बीजेति वृद्धयाशंसा बीजम्। २ तदिति शाल्यादेः। अत इति आशंसनात्। इष्टेति ज्ञानस्य। आशेति विवेकजलत्वे हेतुः। अत इति विवेकात्। ३ यत्नेति आशयपूर्वकः। अन्येति विवेकं विना। अपीति आशंसनवाक्यात्। इदमिति संवेगामृतास्वादनम्। ४ वर्गेति पशुजातेः। एष इति आशयः। ५ तदिति स्वादस्य। तदिति संवेगादौ। ७ अनेति इक्षुरसकल्पा। अस्येति क्रमेलकस्य द्राक्षादाविव। ८ लक्षेति आदरादिलिङ्गकप्राप्तिः। एतेति वृद्धयाशंसनवचनम्। वचेति सर्वव्यावहारिकाणामनन्तशो ग्रैवेयकलाभदर्शकम्। किञ्चीति संवेगामृतास्वादनम्। फलेति सम्यग्दृष्टित्वादिषु। १० एतेति प्रणिधानं। १२ प्रवेति भावश्रुतस्य। सामेति 'सामाइयमाई'त्युक्तेः। शुद्धेति कषच्छेदतापैः। एतेति जिनप्रवचनोद्भवत्वात् सर्वेषाम्, तेषु सुन्दरस्यैतन्मूलत्वात्, असर्वज्ञवाक्यानां सर्वज्ञोक्त्यनुकरणे एव सुन्दरत्वात्। १३ चेति सर्वप्रवादव्याप्तिसमुच्चयः।

पृ. ५४ ला. १ वचेति त्रिस्थल्यामितिवचनादिति क्रमेण कषच्छेदतापशुद्धये, आद्येन द्वयेन विधिप्रतिषेधौ, अन्त्ये सामान्यविशेषोभयार्थं द्वयम्। २ समेति श्रुतस्तवेन।

अन्विति समानबृंहकत्वे। तदिति वृद्धितत्त्वज्ञानाम्। एतीति परम्परापि। अत इति तथा चैतिह्येन निश्चेयं तत्त्वमागमस्य, सत्यस्मिन् न विरोधकल्पना, एवं चैतिह्यलेश एवागमोक्तिरिति। ४ अन्विति अपुनर्बन्धकावस्थाया अयोगिनि। तथेति यथोक्तपरिणामेन। तदिति सिद्धत्वप्राप्तिफलिकाः। ६ सितमिति भावसिद्धप्रहाय। ८ कर्म्मेति सिद्धत्वमात्रमपेक्ष्य। उपेति केवलस्य श्रुतवदपरोपदेशपूर्वकत्वात्, हेतुतया पूर्वकता। १० भुवेति स्वभावतो भावोऽस्याः। अचीति सर्वावस्थातीतत्वात्। चिन्तेति अचिन्त्यफलहेतोः। ११ प्रयविति सिद्धिपदम्। विप्रेति कृतकृत्याः।

पृ. ५५ ला. १ परेति प्रतिबन्धविच्छेदजन्यत्वाद्गुणस्थानानां,समेषां च तद्भावः, विच्छेदश्च क्रमेण, पूर्वपूर्वेषामुत्तरोत्तरजनकत्वात्। २ तदिति क्लेशानाम्। ३ विच्यिति न निगोदादिवत्। अभीति अन्यसिद्धानाम्। ४ उपेति ऊर्ध्वगौरवधर्मत्वात्। ६ अमेति गतिभावः। अविति अलोके धर्माद्यभावात्,तावद्गतेश्च समयेन भावात्। ७ अयश्वेति प्रशस्तभावापूरणमपि। फलेति परम्परया। अमीति जघन्याभिग्रहस्यापि फलवत्त्वनियमात्। १० श्रमेति सर्ववर्णानामत्र प्रवेशात्, उपलक्षणे तु शेषास्त्रयः साध्व्यादयः परिवारभूताः। ११ अन्तेति अन्तराले।

पृ. ५६ ला. १ अन्तेति अपरोपदेशेन। २ आदिति गुणगुणिनोरभेदे, भेदे तु ०दिमतामिति। द्वादशधेति चोलपट्टमात्रकवर्जः। ३ पूर्वेति पूर्वभवाधीतम्। ४ अपीति अपिना स्वयमपि। प्रयेति न स्वयं न च गुरुसन्निधौ। आचेति स्वयं परेण वा जीवादितत्त्वं बोधिताः। ६ 'णरे'ति पुरुषाः। ७ 'णो तित्थे' इति स्त्रियः। न पुमिति अनन्तोत्सर्पिण्यतिक्रमे अपि न,अनन्तवीर्यत्वेन कृत्रिमत्वाभावात्,अन्यस्य तु चारित्रायोग्यत्वात्। द्रव्येति भावलिङ्गाव्यभिचाराद्द्रव्येति। ८ रज

इति एवं मुख्यवृत्त्या मोक्षलिङ्गमेतत् तेन स्वेति। अन्येति संसारहेतुत्वात्त्वन्येति । १० 'उत्ते'ति पश्चानुपूर्व्यैकादिसमयान्तरेण। ११ तीर्थेति कस्यापि तीर्थमनाविर्भाव्यामुक्तेः । १२ अज्ञेति जिनत्वादिभेदेऽपि सिद्धत्वस्यैकरूपता, तथा चाश्वासस्तत्तद्भेदानाम्, अन्यथा सामान्यबोधे विशेषशङ्कायास्तादवस्थ्यादनाश्वासः ॥

पृ. ५७ ला. १ देवेति संसारिदेवानाम् । विनेति आच्यवनादाराधनात् । २ शक्रेति इतरदेवानां स स्तुत्य एव । पूजीति आभवोत्तारमाराधनात् । उत्तेति गुणस्तवाद्भावः, उच्चाराद्वचश्च । ३ गमेति कल्पनार्थे । इहेति गत्यर्थे । ४ स्मृतेति अनेन कर्मेरणाद्वीरत्वदर्शनम् । ५ उपेति नमस्कारफलदर्शनेन । आत्मेति महाफलहेतुताभावेन । ७ वृपेति उत्तमार्थमुत्तरपदे नागादियोजनात् । ८ अपेति ऐकान्तिकात्यन्तिकतया । ९ पुर्विति भेदेन। ग्रहेति, इतरत्रेवोपलक्षणेन ग्रहणमकृत्वा साक्षात्। १० भवेति अन्ययूथिकवद्बौटिकवद्वा न स्त्रीणां मोक्षानर्हता । १३ जातीति, सर्वा नेत्यर्थः ।

पृ. ५८ ला. १ संसेति अभव्यस्यैतदभावात्। धर्म्मेति मोक्षगुणाद्वेषस्य तदर्थकप्रवृत्तिभावात्। २ शुश्रूइति, तत्त्वशुश्रूषा, अन्या त्वन्यस्यापि। तत्त्वेति हेयोपादेयादिरुचिः। आदीति उत्पत्तिक्रमापेक्षया, आदिनाऽनुकम्पाद्याः । ४ दर्शेति देवनारकतिरश्चां सद्दृष्टावपि तदसत्त्वात् । अपेति आर्यदेशानां प्राधान्यात्, अनार्येष्वप्यवाप्तेः। ७ तेनेति तथा रौद्रध्यानाभावेन तथाशुभध्यानाभावस्य । अभेति व्याप्त्यभावात् । भावेति, रौद्रवतः शुक्लफलभावेन । लालेति आर्त्तापोहाय । स्तनेति कुन्दकुन्दैः (कौण्डिन्यैः) एतेन हेतुना निषेधात्, वस्तुतस्तु जलसिद्धभावात् सरोगसाधोर्मुक्तिस्वीकाराद्गण्डूपदादिमतामनिषेधादनेकान्तिकता संसक्तशरीरत्वस्य। ११ तदिति कौण्डिन्यैरप्रवृत्तेरितरासां विवादाच्छास्त्रेति। १२ प्रतीति गोमट्टादिषु


॥ २८ ॥

द्रव्यस्त्रीवेदेऽपि श्रेणेः। १४ अधीति क्षायिकाप्राप्तेः सिद्धत्वस्य।

पृ. ५९ ला. १ इदेति शाकटायनादियापनीयकाले प्रत्यक्षता। अङ्गेति दृष्टिवादस्य 'भूआवाओ अ नो थीण'मित्युक्तेः। तत इति दृष्टिवादात्। कालेति प्रच्छन्नगर्भवत्। ४ केवेति तदधिकारे एतदुक्तेः। सतीति संसारतारणसिद्ध्यर्थम्। ६ फलेति मोक्षः। फलेति सुरादि। अन्येति आचार्यादीनाम्। ७ यक्षेति यक्षा देवाः पूज्या वा। ८ तत इति नतिमात्रात्। ९ तदिति सम्यक्त्वादिसत्त्वे। १० दीनेति क्रमवृद्धिदर्शनाय। अवेति उत्तरोत्तरवृद्धेः। तथेति सम्यक्त्वादिपूर्वकम्। तादिति वृद्धेः। अधीति मोक्षे। ११ सर्वेति यक्षादिविषयाऽपि। त्रिशीति मोक्षः। तुल्येति स्तुतिरूपात्। विषेति स्तुत्यात्त्वम्। १२ यथेति कल्पद्रुमसमत्वादिनिरासाय।

पृ. ६० ला. १ अन्येति बहुवचनात्, 'उज्जिंते'ति 'चत्तारी'ति 'जे अ अई'ति 'जाव'त्ति 'जावन्ते'ति च, स्वयं क्रियमाणानामप्यावश्यके श्रुतदेवतास्तुतेरनुक्तिवदत्रानियमता, पञ्चवस्तुके स्वयं तदुक्तेः। क्रियेनि नियमत इति। २ सम्मेति चूलिकास्तुतीः ऋते सर्वत्रानुभापणाद्बहुत्वम्। उचीति सुरेषु। योगेति स्मरणादिना। एतेति चैत्यवन्दनम्। ५ सामेति न चैवमन्यसमाधिकरणाभाव इति। तेपामिति सम्यग्दृष्टीनामितरेषां च। सम्प्रेति सदा स्वयं तत्र प्रवृत्तत्वात्। ७ तथेति स्तुतिकरणेन। तदिति अम्बादिविषयकः। तदिति क्षेत्रभेदेन भेदात्सुरविशेषाणाम्। अस्मेति कायोत्सर्गादेः। तदिति उत्सर्गकर्त्तुः। ८ अस्येति प्रकरणस्य। तदिति तस्माद्धेतोः। योगेति उत्तरोत्तरगुणवृद्धिः। ९ सामेति वन्दनादिप्रत्ययमनुक्त्वा। दचेति प्रकृतसूत्ररूपम्।

पृ. ६१ ला. १ यथेति उक्तात् 'जयवी'त्यादेरन्यदपि। २ मात्रेति संवेगस्य। तत इति समाधेः। गुणेति अन्येपां निर्वेदादेः सिद्धत्वात्, तथा साधनात्पाताभावाच्च,

अप्रमत्तादर्वाक्तनाः ।५ भावेति तद्विषयपरिणामाय। त्वदिति छिदादौ कुठारादिवत्, भवनिर्वेदादेर्भावे भगवत्प्राधान्यात्। ६ मोक्षेति संसारविपक्षत्वान्निर्वेदहेतुकशमसाध्यत्वाच्च। तदिति भवे। प्रतीति भवपरमार्थबुद्धेर्मोक्षप्रतिबन्धकत्वात्, मोक्षप्रतिबद्धेति अभव्यस्य मोक्षप्रतिबन्धाभावात्। अपीति कृतेऽपि यत्ने। क्रियेति पाञ्चालिकानृत्यादिवत्। तत्त्वेति माध्यस्थ्यात्। ८ फलेति तत्त्वानुसारिणामविरोध्येवेष्टम्। विधेति अपूर्त्तावपि तन्नाशहेत्वसम्भवात्। अन्येति अतत्त्वे। ९ लोकेति विवेक्यविवेक्युभयम्। अनेति पापम्। तदिति अन्यपापहेतुयोजनम्। मातेति 'माता पिता कलाऽऽचार्य०' इत्युक्तेर्मात्रादीनां गुरुवर्गत्वं स्पष्टम्। लौकीति, लोकविरुद्धत्यागादेस्तथात्वात्, उत्तराधिकारहेतुतयाऽऽदर एषाम्। युगिति गुरुशब्दस्य तत्त्वविषयतया साधुत्वार्थत्वम्। अन्येति पार्श्वस्थादियोगे। पथ्येति विकारफलत्वात्, अयोगेति फलाभावात्। १२अयेति तथाकारवचनविषयत्वात् संविग्नपाक्षिकस्यापि तथात्वात्। इतीति आजन्मासंसारव्याख्याद्वये क्षमः। १३ सम्पूति ऐदंपर्यपर्यन्तम्। द्रागिति अन्तर्भवाष्टकम्। फलेति मोक्षफलेन। प्रभेति 'तुहप्पभावओ' त्ति प्रत्ययार्थं योज्यमित्यर्थः। तदिति अभिष्वङ्गो हि तल्लक्षणम्। चित्तेति, मोक्षहेतुप्रणिधानात्।

पृ. ६२ ला. २ बन्धेति, 'आविस्सइ जेण २ भावेणं' त्युक्तेः। विपेति प्रणिधानफलतः। उपेति प्रणिधानरूपः। ३ इदमिति वैशिष्ट्यात्। ७ प्रधेति अयोगत्वादिः। ८ तदिति सुखकारणैः। तदिति समग्रसुखस्य। ९ अनेति आदरादिमान्। १० अन्विति 'जावन्ते' त्यादिना। कुग्रेति व्याख्यासमाप्तिप्रणिधानम्। एतेति सामग्रीसम्पादनप्रत्यलत्वम् कर्म्मेति देवगुर्वादिबहुमानादिषु। अकल्येति पार्श्वस्थादयः। ११ कल्येति संविग्नाः। उच्चीति बलवत्तरत्वात्। मार्गेति धर्माचार्यधारत्वात्। गुर्विति मातापित्रादेः। १२ तदिति विनय-

गुणस्य महत्त्वात् । दानेति दीनानाथादेः । भगेति जिनानाम् । साध्विति संविग्नादिः। शास्त्रेति कामार्थशास्त्राणां मोहोद्दीपकत्वात् । महेति ऐदम्पर्यविगमाय । १३ विधेति अविधेर्विषयत्वात् । धैर्यमिति आपत्स्वपि धर्मनिर्वाहाय, धर्मकपोपलो हि तत् । आयेति दृष्टिवादोपदेशिक्या रूपम् । मृत्स्विति भववैराग्यमूलत्वात् । परेति विमध्यमानामुभयार्थप्रवृत्तेः । १४ गुर्विति धर्मोपदेशकादिः । रूपेति योगपटालिखितदेवादेः । धारेति फलभावनया । विक्षेपेति विकथादि । योगेति सूत्रवर्णार्थालम्बनरूपः ।

पृ. ६३ ला. १ भगेति बोधिबीजत्वात् । इश्वेति दुष्पभाजनाधारत्वात् । मङ्गेति भवान्तरसंस्कारहेतुः । शरेति अन्येषामशरणत्वावगमात् । दुरिति परमोद्वेगस्य धर्मलिङ्गत्वात् । २ कुशेति तत्प्राप्तिमूलत्वात् । देवेति निरुपघाताय । सदिति शुभसंस्काराय । औदेति आद्यलिङ्गम् । उत्तेति तीव्रालम्बनत्वात् । ३ प्रवृत्तीति प्रथमगुणस्थानत्वेऽपि । आदीति सकृद्बन्धनत्वादेः । ४ रूपेति कार्यत्वात् । ५ तदिति मार्गगामिनी । हार्दाः तत्त्ववेत्तारः । अस्य अपुनर्बन्धकादेः। ६ तदिति योगसाङ्ख्यसौगतादि । एवमिति तत्त्वाविरोधकहृदा । ७ भग्नः पतितोऽपि । प्रतीति पुनः प्रतिपत्तेः। ८ एतेति व्याख्यानम् । आदेति अर्थाज्ञानेऽपि इक्षुकल्पताहेतुः । सूक्ष्मेति धर्मव्याघातवर्जनमेवम् । ९ अन्येति अर्थाज्ञानां संवेगादिशून्यत्वात्प्रायः । ११ महेति व्याख्यानम् । ११ विरेति ग्रन्थसमाप्तिद्योतकः । कल्पेति, चैत्यवन्दनजन्यकर्मक्षयात् सर्वकल्याणाप्तिः । १२ सदिति अबाधानुमानागमाश्रिता । १३ सदिति अविधिज्ञानतत्परिहारादिना । सुवीति भवान्तरवन्दनप्राप्तिसत्फलहेतुः । परेति आभिनिवेशिकशिक्षायै । १४ युज्येति अनधिगततत्त्वनीतिरियम् ।

पृ. ६४ ला. १ सत्त्वेति, असम्भवेऽपि प्रशस्तभावाय, म्रियमाणायापि जीवत्त्वित्याशीर्वत् । इति ललित० टीप्पनिका





॥ ३१ ॥

सूरिपुरन्दरभवविरहाङ्कयाकिनीमहत्तरासूनुश्रीहरिभद्राचार्यप्रणीता

# ललितविस्तराख्या चैत्यस्तववृत्तिः।

प्रणम्य भुवनालोकं, महावीरं जिनोत्तमम्। चैत्यवन्दनसूत्रस्य, व्याख्येयमभिधीयते ॥१॥

अनन्तगमपर्यायं, सर्वमेव जिनागमे। सूत्रं यतोऽस्य कार्त्स्न्येन, व्याख्या कः कर्तुमीश्वरः? ॥२॥ यावत्तथापि विज्ञातमर्थजातं मया गुरोः। सकाशादल्पमतिना, तावदेव ब्रवीम्यहम् ॥३॥ ये सत्त्वाः कर्म्मवशतो, मत्तोऽपि जडबुद्धयः। तेषां हिताय गदतः, सफलो मे परिश्रमः ॥४॥ इति

अत्राह–चिन्त्यमत्र साफल्यं, चैत्यवन्दनस्यैव निष्फलत्वात् इति, अत्रोच्यते, निष्फलत्वादित्यसिद्धं, प्रकृष्टशुभाध्यवसायनिबन्धनत्वेन ज्ञानावरणीयादिलक्षणकर्म्मक्षयादिफलत्वाद्, उक्तं च–"चैत्यवन्दनतः सम्यक्, शुभो भावः प्रजायते। तस्मात्कर्म्मक्षयः सर्वं, ततः कल्याणमश्नुते ॥१॥ इत्यादि ॥" आह–नायमेकान्तो, यदुत–ततः शुभ एव भावो भवति, अनाभोगमातृस्थानादेर्विपर्ययस्यापि दर्शनादिति, अत्रोच्यते, सम्यक्करणे विपर्ययाभावात्, तत्सम्पादनार्थमेव च नो व्याख्यारम्भप्रयास इति, न ह्यविदिततदर्थाः प्रायस्तत्सम्यक्करणे प्रभविष्णव इति। आह–लब्ध्यादिनिमित्तं मातृस्थानतः सम्यक्करणेऽपि शुभभावानुपपत्तिरिति, न, तस्य सम्यक्करणत्वासिद्धेः, तथाहि–प्रायोऽधिकृतसूत्रोक्तेनैव विधिनोपयुक्तस्याऽऽशंसादोषरहितस्य सम्यग्दृष्टेर्भक्तिमत एव

सम्यकरणं, नान्यस्य, अनधिकारित्वाद्, अनधिकारिणः सर्वत्रैव कृत्ये सम्यकरणाभावात्, श्रावणेऽपि तर्ह्यस्याधिकारिणो मृग्याः ?, को वा किमाह ?, एवमेवैतत्, न केवलं श्रावणे, किं तर्हि ?, पाठेऽपि, अनधिकारिप्रयोगे प्रत्युतानर्थसम्भवात्, 'अहितं पथ्यमप्यातुरे' इति वचनप्रामाण्यात्, तथा 'अर्थी[1]समर्थः[2]शास्त्रेणापर्युदस्तो[3]धर्मेऽधिक्रियते' इति विद्वत्प्रवादः,धर्म्मश्चैतत्पाठादि, कारणे कार्योपचारात्, यद्येवमुच्यतां के पुनरस्याधिकारिण इति, उच्यते, एतद्बहुमानिनो[1] विधिपरा[2]उचितवृत्तयश्च[3], न हि विशिष्टकर्म्मक्षयमन्तरेणैवंभूता भवन्ति, क्रमोऽप्ययमीषामयमेव, न खलु तत्त्वत एतदबहुमानिनो विधिपरा नाम, भावसारत्वाद्विधिप्रयोगस्य, न चायं बहुमानाभावे इति, न चामुष्मिकविधावप्यनुचितकारिणोऽन्यत्रौचितवृत्तय इति, विषयभेदेन तदौचित्याभावाद्, अप्रेक्षापूर्वकारिविजृम्भितं हि तत्, तदेतेऽधिकारिणः परार्थप्रवृत्तैर्लिङ्गतोऽवसेयाः, मा भूदनधिकारिप्रयोगे दोष इति, लिङ्गानि चैषां तत्कथाप्रीत्यादीनि, तद्यथा—तत्कथाप्रीतिः[1] निन्दाऽश्रवणम्[2] तदनुकम्पा[3] चेतसो न्यासः[4]परा जिज्ञासा[5] (१)तथा गुरुविनयः[1] सत्कालापेक्षा[2] उचितासनं[3]युक्तस्वरता[4]पाठोपयोगः(२)तथा लोकप्रियत्वं[1]अगर्हिता क्रिया[2]व्यसने धैर्यं[3]शक्तितस्त्यागो[4]लब्धलक्षत्वं[5](३)चेति,एभिस्तदधिकारितामवेत्यैतदध्यापने प्रवर्त्तेत,अन्यथा दोष इत्युक्तम्। आह-कइवानधिकारिप्रयोगे दोष इति, उच्यते,स ह्यचिन्त्यचिन्तामणिकल्पमनेकभवशतसहस्रोपात्तानिष्टदुष्टाष्टकर्म्मराशिजनितदौर्गत्यविच्छेदकमपीदमयोग्यत्वात् अवाप्य न विधिवदासेवते, लाघवं चास्यापादयतीति,ततो विधिसमासेवकः कल्याणमिव महदकल्याणमासादयति,उक्तं च-'धर्म्मानुष्ठानवैतथ्यात्,प्रत्यपायो महान् भवेत्। रौद्रदुःखौघजनको, दुष्प्रयुक्तादिवौषधाद् ॥ १ ॥ इत्यादि' अतोऽनधिकारिप्रयोगे प्रयोक्तृकृतमेव तत्त्वतस्तदकल्याणमिति, लिङ्गैस्तदधिकारितामवेत्यैतदध्यापने प्रवर्त्तेत, एवं हि कुर्वता आराधितं वचनं बहुमतो लोकनाथः परित्यक्ता लोकसंज्ञा अङ्गीकृतं

लोकोत्तरयानं समासेविता धर्म्मचारितेति, अतोऽन्यथा विपर्यय इत्यालोचनीयमेतदतिसूक्ष्माभोगेन, नहि वचनोक्तमेव पन्थानमुल्लङ्घ्यापरो हितास्युपायः, न चानुभवाभावे पुरुषमात्रप्रवृत्तेस्तथेष्टफलसिद्धिः, अपिच—लाघवापादनेन शिष्टप्रवृत्तिनिरोधतस्तद्विघात एव, अपवादोऽपि सूत्राबाधया गुरुलाघवालोचनपरोऽधिकदोषनिवृत्त्या शुभः शुभानुबन्धी महासत्त्वासेवित उत्सर्गभेद एव, न तु सूत्रबाधया,/गुरुलाघवचिन्ताऽभावेन हितमहितानुबन्ध्यसमंजसं, परमगुरुलाघवकारिक्षुद्रसत्त्वविजृम्भितमिति ॥ एतदङ्गीकरणमप्यनात्मज्ञानां संसारसरिच्छ्रोतसि कुशकाशावलम्बनमिति परिभावनीयं सर्वथा, निरूपणीयं प्रवचनगाम्भीर्यं, विलोकनीया तन्त्रान्तरस्थितिः, दर्शनीयं ततोऽस्याधिकत्वं, अपेक्षितव्यो व्याप्तीतरविभागः, यतितव्यमुत्तमनिदर्शनेष्विति श्रेयोमार्ग्गः। व्यवस्थितश्चायं महापुरुषाणां क्षीणप्रायकर्म्मणां विशुद्धाशयानां भवाबहुमानिनां अपुनर्बन्धकादीनामिति, अन्येषां पुनरिहानधिकार एव, शुद्धदेशनाऽनर्हत्वात्, शुद्धदेशना हि क्षुद्रसत्त्वमृगयूथसंत्रासनसिंहनादः, ध्रुवस्तावदतो बुद्धिभेदः तदनु सत्त्वलेशचलनं कल्पितफलाभावापत्त्या दीनता स्वभ्यस्तमहामोहवृद्धिः ततोऽधिकृतक्रियात्यागकारी संत्रासः, भवाभिनन्दिनां स्वानुभवसिद्धमप्यसिद्धमेतद्, अचिन्त्यमोहसामर्थ्यादिति, न खल्वेतानधिकृत्य विदुषा शास्त्रसद्भावः प्रतिपादनीयो, दोषभावादिति, उक्तं च—"अप्रशान्तमतौ शास्त्रसद्भावप्रतिपादनम्। दोषायाभिनवोदीर्णे, शमनीयमिव ज्वरे॥ १॥" इति कृतं विस्तरेण, अधिकारिण एवाधिकृत्य पुरोदितान् अपक्षपातत एव निरस्येतरान् प्रस्तुतमभिधीयत इति।

इह प्रणिपातदण्डकपूर्वकं चैत्यवन्दनमिति स एवादौ व्याख्यायते, तत्र चायं विधिः—इह साधुः श्रावको वा चैत्यगृहादावेकान्तप्रयतः परित्यक्तान्यकर्तव्यः प्रदीर्घतरतद्भावगमनेन यथासम्भवं भुवनगुरोः सम्पादितपूजोपचारः ततः सकलसत्त्वानपायिनीं भुवं निरीक्ष्य



॥ ३ ॥

विधिःप्रणिपातदंडकः संपदः

पमरगुरुप्रणीतेन विधिना प्रमृज्य च क्षितिनिहितजानुकरतलः प्रवर्द्धमानातितीव्रतरशुभपरिणामो भक्त्यतिशयात् मुदश्रुपरिपूर्णलोचनो रोमांचाञ्चितवपुः मिथ्यात्वजलनिलयानेककुग्राहनक्रचक्राकुले भवाब्धावनित्यत्वाचायुषोऽतिदुर्लभमिदं सकलकल्याणैककारणं चाधः-कृतचिन्तामणिकल्पद्रुमोपमं भगवत्पादवन्दनं कथञ्चिदवाप्तं,नचातः परं कृत्यमस्तीत्यनेनात्मानं कृतार्थमभिमन्यमानो भुवनगुरौ विनिवेशितनयनमानसोऽतिचारभीरुतया सम्यक् अस्खलितादिगुणसम्पदुपेतं तदर्थानुस्मरणगर्भमेव प्रणिपातदण्डकसूत्रं पठति, तच्चेदम्

नमोऽत्थुणं अरहंताणं १ भगवंताणं २, आइगराणं ३ तित्थयराणं ४ सयंसंबुद्धाणं ५, पुरिसुत्तमाणं ६ ५
पुरिससीहाणं ७ पुरिसवरपुंडरीयाणं ८ पुरिसवरगंधहत्थीणं ९, लोगुत्तमाणं १० लोगनाहाणं ११ लोगहियाणं
१२ लोगपईवाणं १३ लोगपज्जोअगराणं १४, अभयदयाणं १५ चक्खुदयाणं १६ मग्गदयाणं १७ सरण-
दयाणं १८ बोहिदयाणं १९, धम्मदयाणं २० धम्मदेसयाणं २१ धम्मनायगाणं २२ धम्मसारहीणं २३ धम्म-
वरचाउरंतचक्कवट्टीणं २४, अप्पडिहयवरनाणदंसणधराणं २५ विअट्टछउमाणं २६, जिणाणं जावयाणं २७
तिण्णाणं तारयाणं २८ बुद्धाणं बोहयाणं २९ मुत्ताणं मोयगाणं ३० सव्वण्णूणं सव्वदरिसीणं ३१ सिवमयल- १०
मरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं ३२ णमो जिणाणं जिअभयाणं ३३॥

इह द्वात्रिंशदालापकाः, त्रयस्त्रिंशदित्यन्ये 'वियट्टच्छउमाण'मित्यनेन सह। इह चाद्यालापकद्वयेन स्तोतव्यसम्पदुक्ता, यतोऽर्हतामेव भगवतां स्तोतव्ये समग्रं निबन्धनं, तदन्यैस्तु त्रिभिः स्तोतव्यसम्पद एव प्रधाना साधारणासाधारणरूपा हेतुसम्पत्, यत आदिकरणशीला एव तीर्थकरत्वेन स्वयंसम्बोधितश्चैते भवन्ति, तदपरैस्तु चतुर्भिः स्तोतव्यसम्पद एवासाधारणरूपा हेतुसम्पत्,


॥ ४ ॥

पुरुषोत्तमानामेव सिंहपुण्डरीकगन्धहस्तिधर्म्मभाक्त्वेन तद्भावोपपत्तेः, तदन्यैस्तु पञ्चभिः स्तोतव्यसम्पद एव सामान्येनोपयोगसम्पत्, लोकोत्तमत्वलोकनाथत्वलोकहितत्वलोकप्रदीपत्वलोकप्रद्योतकरत्वानां परार्थत्वात्, तदपरैस्तु पञ्चभिरस्या एवोपयोगसम्पदो हेतुसम्पत्, अभयदानचक्षुर्दानमार्गदानशरणदानबोधिदानैः परार्थसिद्धेः, तदन्यैस्तु पञ्चभिः स्तोतव्यसम्पद एव विशेषेणोपयोगसम्पत्, धर्म्मदत्वधर्म्मदेशकत्वधर्म्मनायकत्वधर्म्मसारथित्वधर्म्मवरचातुरन्तचक्रवर्त्तित्वेभ्यस्तद्विशेषोपयोगात्, तदन्यद्वयेन तु स्तोतव्यसम्पद एव सकारणा स्वरूपसम्पत्, अप्रतिहतवरज्ञानदर्शनधरा व्यावृत्तच्छद्मानश्चार्हन्तो भगवन्त इति हेतोः, तदपरैश्चतुर्भिरात्मतुल्यपरफलकर्तृत्वसम्पत्, जिनजापकत्वतीर्णतारकत्वबुद्धबोधकत्वमुक्तमोचकत्वानामेवंप्रकारत्वात्, तदन्यैस्तु त्रिभिः प्रधानगुणापरिक्षयप्रधानफलाप्त्यभयसम्पदुक्ता, सर्वज्ञसर्वदर्शिनामेव शिवाचलादिस्थानसम्प्राप्तौ जितभयत्वोपपत्तेः । इयं च चित्रा सम्पत् अनन्तधर्म्मात्मके वस्तुनि मुख्ये मुख्यवृत्त्या, स्तवप्रवृत्तिश्चैवं प्रेक्षापूर्वकारिणामिति संदर्शनार्थमेवमुपन्यासोऽस्य सूत्रस्य, स्तोतव्यनिमित्तोपलब्धौ तन्निमित्ताद्यन्वेषणयोगादिति प्रस्तावना ॥

अथास्य व्याख्या, तल्लक्षणं च संहितादि, यथोक्तम्—" संहिता च पदं चैव, पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा ॥ १ ॥" इति, एतदङ्गानि तु जिज्ञासा गुरुयोगो विधिः इत्यादीनि, अत्राप्युक्तम्—"जिज्ञासा[1] गुरुयोगो[2] विधिपरता[3] बोधपरिणतिः[4] स्थैर्यम् ५। उक्तक्रिया[6]ऽल्पभवता,[7] व्याख्याङ्गानीति समयविदः ॥४॥" तत्र 'नमोऽस्त्वर्हद्भ्यः' इति संहिता, पदानि तु नमः अस्तु अर्हद्भ्यः, पदार्थस्तु 'नम' इति पूजार्थं, पूजा च द्रव्यभावसङ्कोचः, तत्र करशिरःपादादिसंन्यासो द्रव्यसङ्कोचः, भावसङ्कोचस्तु विशुद्धस्य मनसो नियोग इति, अस्त्विति भवतु, प्रार्थनाऽर्थोऽस्येति, णमितिवाक्याल-

ङ्कारे, प्राकृतशैल्या इति चेहोपन्यस्तः 'अर्हद्भ्य' इति देवादिभ्योऽतिशयपूजामर्हन्तीत्यर्हन्तस्तेभ्यो, नमःशब्दयोगाच्चतुर्थी, पदविग्रहस्तु यानि समासभाञ्जि पदानि तेषामेव भवतीति नेहोच्यते, चालना तु अधिकृतानुपपत्तिचोदना, यथा–अस्त्विति प्रार्थना न युज्यते, तन्मात्रादिष्टासिद्धेः, प्रत्यवस्थानं तु नीतितस्तन्निरासः, यथा–युज्यत एव, इत्थमेवेष्टसिद्धेरिति, पदयोजनामात्रमेतद्, भावार्थं तु वक्ष्यामः, व्याख्याङ्गानि तु जिज्ञासादीनि, तद्व्यतिरेकेण तदप्रवृत्तेः, तत्र धर्मं प्रति मूलभूता वन्दना, अथ कोऽस्यार्थः इति ज्ञातुमिच्छा जिज्ञासा, न सम्यग्ज्ञानादृते सम्यक्रिया 'पढमं नाणं ततो दये' तिवचनात्, विशिष्टक्षयक्षयोपशमनिमित्तेयं नासम्यग्दृष्टेर्भवतीति तन्त्रविदः[1], तथा गुरुणा–यथार्थाभिधानेन स्वपरतन्त्रविदा परहितनिरतेन पराशयवेदिना सम्यक् सम्बधः, एतद्विपर्ययाद्विपर्ययसिद्धेः, तद्व्याख्यानमपि अव्याख्यानमेव, अभक्ष्यास्पर्शनीयन्यायेनानर्थफलमेतदिति परिभावनीयं[2], तथा विधिपरता–मण्डलिनिषद्याक्षादौ प्रयत्नो ज्येष्ठक्रमानुपालनं उचितासनक्रिया सर्वथा विक्षेपसंत्यागः उपयोगप्रधानतेति श्रवणविधिः, हेतुरयं कल्याणपरम्परायाः, अतो हि नियमतः सम्यग्ज्ञानं, न ह्युपाय उपेयव्यभिचारी, तद्भावानुपपत्तेरिति[3], तथा बोधपरिणतिः–सम्यग्ज्ञानस्थिरता रहिता कुतर्कयोगेन संवृतरत्नाधाराप्तिकल्पा युक्ता मार्गानुसारितया तन्त्रयुक्तिप्रधाना, स्तोकायामप्यस्यां न विपर्ययो भवति, अनाभोगमात्रं, साध्यव्याधिकल्पं तु तद्, वैद्यविशेषपरिज्ञानादिति[4], तथा स्थैर्यं–ज्ञानद्र्यनुत्सेकः, तदज्ञानुपहसनं, विवादपरित्यागः, अज्ञबुद्धिभेदाकारणं, प्रज्ञापनीये नियोगः, संयमपात्रता नाम बहुमता गुणज्ञानां विग्रहवती शमश्रीः, स्वाश्रयो भावसम्पदामिति[5], तथोक्तस्य–विज्ञातस्य तत्तत्कालयोगिनः तदासेवनसमये तथोपयोगपूर्वं शक्तितस्तथाक्रिया, नौषधज्ञानमात्रादारोग्यं, क्रियोपयोग्येव तत्, न चेयं यादृच्छिकी शस्ता, प्रत्यपायसम्भवादिति[6], तथा

अल्पभवता व्याख्याङ्गं प्रदीर्घतरसंसारिणस्तत्त्वज्ञानायोगात्, तत्राल्पः—पुद्गलपरावर्त्तादारतो भवः—संसारो यस्य तद्भावः अल्पभवता, नहि दीर्घदौर्गत्यभाक् चिन्तामणिरत्नावाप्तिहेतुः, एवमेव नानेकपुद्गलपरावर्त्तभाजो व्याख्याङ्गमिति समयसारविदः[७], अतः साकल्यत एतेषां व्याख्यासिद्धिः, तस्याः सम्यग्ज्ञानहेतुत्वादिति सूक्ष्मधियाऽऽलोचनीयमेतत् ॥ तत्र 'नमोऽस्त्वर्हद्भ्य' इत्यत्रास्तु-भवत्विति आदौ प्रार्थनोपन्यासेन दुरापो भावनमस्कारः, तत्त्वधर्म्मत्वाद्, अत इत्थं बीजाधानसाध्य इति ज्ञापनार्थं, उक्तं च—"विधिनोप्ताद्यथा बीजादङ्कुराद्युदयः क्रमात् । फलसिद्धिस्तथा धर्म्मबीजादपि विदुर्बुधाः ॥ १ ॥ वपनं धर्म्मबीजस्य, सत्प्रशंसादि तद्गतम् । तच्चिन्ताद्यङ्कुरादि स्यात्, फलसिद्धिस्तु निर्वृतिः ॥२ ॥ चिन्तासच्छ्रुत्यनुष्ठानं, देवमानुषसम्पदः । क्रमेणाङ्कुरसत्काण्डनालपुष्पसमा मताः ॥ ३ ॥ फलं प्रधानमेवाहुर्नानुषङ्गिकमित्यपि । पलालादिपरित्यागात्, कृषौ धान्याप्तिवद्बुधाः, ॥ ४ ॥ अत एव च मन्यंते, तत्त्वभावितबुद्धयः । मोक्षमार्ग्गक्रियामेकां, पर्यन्तफलदायिनीम् ॥५॥ इत्यादि" । आह—यद्येवं न सामान्येनैवं पाठो युक्तो, भावनमस्कारवतस्तद्भावेन तत्साधनायोगात्, एवमपि पाठे मृषावादः, 'असदभिधानं मृषेति' वचनात्, असदभिधानं च भावतः सिद्धे तत्प्रार्थनावचः, तद्भावेन तद्भवनायोगादिति, उच्यते, यत्किञ्चिदेतत्, तत्तत्त्वापरिज्ञानात्, भावनमस्कारस्यापि उत्कर्षादिभेदोऽस्त्येवेति तत्त्वं, एवं च भावनमस्कारवतोऽपि तथा तथोत्कर्षादिभावेनास्य तत्साधनायोगोऽसिद्धः, तदुत्कर्षस्य साध्यत्वेन तत्साधनत्वोपपत्तेरिति, एवं चएवमपि पाठे मृषावाद इत्याद्यपार्थकमेव, 'असिद्धे तत्प्रार्थनावच' इति न्यायोपपत्तेः, तत्प्रकर्षवांस्तु वीतरागो, न चैवं पठतीति, न चान्यस्तत्प्रकर्षवान्, भावपूजायाः प्रधानत्वात्, तस्याश्च प्रतिपत्तिरूपत्वाद्, उक्तं चान्यैरपि—"पुष्पामिषस्तोत्रप्रतिपत्तिपूजानां यथोत्तरं प्राधान्यं" प्रतिपत्तिश्च वीतरागे ॥ पूजार्थं च नम इति, 'पूजा द्रव्यभावसङ्कोचः'

माणेन शास्त्रयोगस्य, निर्विशेषेण सम्पूर्णनमोमात्राभिधानात्, विशेषप्रयोजनं चास्य स्वस्थान एव वक्ष्याम इति २, तथा—'इक्कोऽवि नमुक्कारो, जिणवरवसहस्स वद्धमाणस्स। संसारसागराओ, तारेइ नरं व नारिं वा ॥१॥' इत्यनेन तु पर्यन्तवर्तिना सामर्थ्ययोगस्य, कारणे कार्योपचारात्, न संसारतरणं सामर्थ्ययोगमन्तरेणेतिकृत्वा ३।

आह—अयं 'प्रातिभज्ञानसङ्गत' इत्युक्तं, तत्किमिदं प्रातिभं नाम ?, असदेतत्, मत्यादिपञ्चकातिरेकेणास्याश्रवणाद्, उच्यते, चतुर्ज्ञानप्रकर्षोत्तरकालभावि केवलज्ञानादधः तदुदये सवित्रालोककल्पमिति न मत्यादिपञ्चकातिरेकेणास्य श्रवणं, अस्ति चैतद्, अधिकत्वावस्थोपपत्तेरिति, एतद्विशेष एव प्रातिभमिति कृतं विस्तरेण १।

एते चार्हन्तो नामाद्यनेकभेदाः, "नामस्थापनाद्रव्यभावतस्तन्न्यास" इति ( तत्त्वार्थे अ० १ सू० ५ ) वचनात्, तत्र भावोपकारकत्वेन भावार्हत्सम्परिग्रहार्थमाह—"भगवद्भ्य इति" तत्र भगः—समग्रैश्वर्यादिलक्षणः, उक्तं च—"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः। धर्म्मस्याथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १ ॥" समग्रं चैश्वर्यं भक्तिनम्रतया त्रिदशपतिभिः शुभानुबन्धिमहाप्रातिहार्यकरणलक्षणं[1], रूपं पुनः सकलसुरस्वप्रभावविनिर्म्मिताङ्गुष्ठरूपाङ्गारनिदर्शनातिशयसिद्धं[2], यशस्तु रागद्वेषपरीषहोपसर्गपराक्रमसमुत्थं त्रैलोक्यानन्दकार्याकालप्रतिष्ठं[3], श्रीः पुनः घातिकर्मोच्छेदविक्रमावाप्तकेवलालोकनिरतिशयसुखसम्पत्समन्वितता परा[4], धर्म्मस्तु सम्यग्दर्शनादिरूपो दानशीलतपोभावनामयः साश्रवानाश्रवो महायोगात्मकः[5], प्रयत्नः पुनः परमवीर्यसमुत्थ एकरात्रिक्यादिमहाप्रतिमाभावहेतुः समुद्घातशैलेश्यवस्थाव्यङ्ग्यः समग्र इति[6], अयमेवंभूतो भगो विद्यते येषां ते भगवन्तः तेभ्यो भगवद्भ्यो नमोऽस्त्विति २, एवं सर्वत्र क्रिया योजनीया। तदेवंभूता एव प्रेक्षावतां स्तोतव्या इति स्तोतव्यसम्पत् १ ॥

एतेऽपि भगवन्तः प्रत्यात्मप्रधानवादिभिर्मौलिकसाङ्ख्यैः सर्वथाऽकर्त्तारोऽभ्युपगम्यन्ते 'अकर्त्ताऽऽत्मेति' वचनात्, तद्व्यपोहेन कथञ्चित् कर्तृत्वाभिधित्सयाऽऽह—"आदिकरेभ्यः" इति, इहादौ करणशीला आदिकराः, अनादावपि भवे तदा तदा तत्तत्कर्म्माण्वादिसम्बन्धयोग्यतया विश्वस्यात्मादिगामिनो जन्मादिप्रपञ्चस्येति हृदयं, अन्यथाऽधिकृतप्रपञ्चासम्भवः, प्रस्तुतयोग्यतावैकल्ये प्रक्रान्तसम्बन्धासिद्धेः, अतिप्रसङ्गदोषव्याघातात्, मुक्तानामपि जन्मादिप्रपञ्चस्यापत्तेः, प्रस्तुतयोग्यताऽभावेऽपि प्रक्रान्तसम्बन्धाविरोधादिति परिभावनीयमेतत्, न च तत्तत्कर्माण्वादेरेव तत्स्वभावतयाऽऽत्मनस्तथा सम्बन्धसिद्धिः, द्विष्ठत्वेन अस्योभयोस्तथास्वभावापेक्षित्वात्, अन्यथा कल्पनाविरोधात्, न्यायानुपपत्तेः, न हि कर्माण्वादेस्तथाकल्पनायामप्यलोकाकाशेन सम्बन्धः, तस्य तत्सम्बन्धस्वभावत्वायोगात्, अतत्स्वभावे चालोकाकाशे विरुध्यते कर्म्माण्वादेस्तत्स्वभावताकल्पनेतिन्यायानुपपत्तिः, तत्स्वभावताङ्गीकरणे चास्यास्मदभ्युपगतापत्तिः, न चैवं स्वभावमात्रवादसिद्धिः, तदन्यापेक्षित्वेन सामग्र्याः फलहेतुत्वात्, स्वभावस्य च तदन्तर्गतत्वेनेष्टत्वात्, निर्लोठितमेतदन्यत्रेत्यादिकरत्वसिद्धिः ३।

एवमादिकरा अपि कैवल्यावाप्त्यनन्तरापवर्गवादिभिरागमधार्मिकैरतीर्थकरा एवेष्यन्ते, 'अकृत्स्नकर्म्मक्षये कैवल्याभावा'दिति वचनात्, तन्निरासेनैषां तीर्थकरत्वप्रतिपादनायाह—"तीर्थकरेभ्यः" इति, तत्र तीर्थकरणशीलाः तीर्थकराः, अचिन्त्यप्रभावमहापुण्यसंज्ञिततन्नामकर्म्मविपाकतः, तस्यान्यथा वेदनायोगात्, तत्र येनेह जीवा जन्मजरामरणसलिलं मिथ्यादर्शनाविरतिगम्भीरं महाभीषणकषायपातालं सुदुर्लङ्घ्यमोहावर्त्तरौद्रं विचित्रदुःखौघदुष्टश्वापदं रागद्वेषपवनविक्षोभितं संयोगवियोगवीचीयुक्तं प्रबलमनोरथवेलाकुलं सुदीर्घं संसारसागरं तरन्ति तत्तीर्थमिति, एतच्च यथावस्थितसकलजीवादिपदार्थप्ररूपकं अत्यन्तानवद्यान्याविज्ञातचरणकरणक्रियाऽऽ-



॥ १० ॥

धारं त्रैलोक्यगतशुद्धधर्मसम्पद्युक्तमहासत्त्वाश्रयं अचिन्त्यशक्तिसमन्वितावसंवादिपरमबोहित्थकल्पं प्रवचनं सङ्घो वा, निराधारस्य प्रवचनस्यासम्भवाद्, उक्तं च–"तित्थं भंते! तित्थं? तित्थगरे तित्थं?, गोयमा! अरहा ताव नियमा तित्थंकरे, तित्थं पुण चाउव्वण्णो समणसङ्घो" ततश्चैतदुक्तं भवति–घातिकर्म्मक्षये ज्ञानकैवल्ययोगात्तीर्थकरनामकर्म्मोदयतस्तत्स्वभावतया आदित्यादिप्रकाशनिदर्शनतः शास्त्रार्थप्रणयनात्, मुक्तकैवल्ये तदसम्भवेनागमानुपपत्तेः, भव्यजनधर्म्मप्रवर्त्तकत्वेन परम्परानुग्रहकरास्तीर्थकरा इति तीर्थकरत्वसिद्धिः ४।

एतेऽप्यप्रत्ययानुग्रहबोधतन्त्रैः सदाशिववादिभिस्तदनुग्रहबोधवन्तोऽभ्युपगम्यन्ते 'महेशानुग्रहात् बोधनियमा' विति वचनात्, एतद्व्यपोहायाह–" स्वयंसम्बुद्धेभ्यः" तथाभव्यत्वादिसामग्रीपरिपाकतः प्रथमसम्बोधेऽपि, स्वयोग्यताप्राधान्यात्, त्रैलोक्याधिपत्यकारणाचिन्त्यप्रभावतीर्थकरनामकर्म्मयोगे चापरोपदेशेन स्वयं-आत्मनैव सम्यग्वरबोधिप्राप्त्या बुद्धा मिथ्यात्वनिद्रापगमसम्बोधेन स्वयंसम्बुद्धाः, न वै कर्म्मणो योग्यताऽभावे तत्र क्रिया क्रिया, स्वफलाप्रसाधकत्वात्, अश्वमाषादौ शिक्षापक्त्याद्यपेक्षया, सकललोकसिद्धमेतदिति नाभव्ये सदाशिवानुग्रहः, सर्वत्र तत्प्रसङ्गाद्, अभव्यत्वाविशेषादिति भावनीयं, बोधिभेदोऽपि तीर्थकरातीर्थकरयोर्न्याय्य एव, विशिष्टेतरफलयोः परम्पराहेत्वोरपि भेदात्, एतदभावे तद्विशिष्टेतरत्वानुपपत्तेः, भगवद्बोधिलाभो हि परम्परया भगवद्भावनिर्वर्त्तनस्वभावो, न त्वन्तकृत्केवलिबोधिलाभवदतत्स्वभावः, तद्वत्ततस्तद्भावासिद्धेरिति, तत्तत्कल्याणाक्षेपकानादितथाभव्यताभावभाज एते इति स्वयंसम्बुद्धत्वसिद्धिः ५॥ एवमादिकर्तॄणां तीर्थकरत्वेनान्यासाधारणस्वयंसम्बोधेनेति स्तोतव्यसम्पद एव प्रधाना साधारणासाधारणरूपा हेतुसम्पदिति २।



॥ ११ ॥

उत्तमत्वं सिंहत्वं च

एते च सर्वसत्त्वैवंभाववादिभिर्बौद्धविशेषैः सामान्यगुणत्वेन न प्रधानतयाऽङ्गीक्रियन्ते, 'नास्तीह कश्चिदभाजनं सत्त्वः' इति वचनात्, तदेतन्निराचिकीर्षयाऽऽह—"पुरुषोत्तमेभ्य" इति, पुरि शयनात् पुरुषाः—सत्त्वा एव तेषां उत्तमाः—सहजतथाभव्यत्वादिभावतः प्रधानाः पुरुषोत्तमाः, तथाहि—आकालमेते परार्थव्यसनिन उपसर्जनीकृतस्वार्था उचितक्रियावन्तः अदीनभावाः सफलारम्भिणः अदृढानुशयाः कृतज्ञतापतयः अनुपहतचित्ता देवगुरुबहुमानिनस्तथा गम्भीराशया इति, न सर्व एव एवंविधाः, खुडुङ्कानां व्यत्ययोपलब्धेः, अन्यथा खुडुङ्काभाव इति, नाशुद्धमपि जात्यरत्नं समानमजात्यरत्नेन, न चेतरदितरेण, तथा संस्कारयोगे सत्युत्तरकालमपि तद्भेदोपपत्तेः, न हि काचः पद्मरागीभवति, जात्यनुच्छेदेन गुणप्रकर्षाभावाद्, इत्थं चैतदेवं,प्रत्येकबुद्धादिवचनप्रामाण्यात्, तद्भेदानुपपत्तेः, न तुल्यभाजनतायां तद्भेदो न्याय्य इति, न चात एव मुक्तावपि विशेषः, कृत्स्नकर्म्मक्षयकार्यत्वात्, तस्य चाविशिष्टत्वात्, दृष्टश्च दरिद्रेश्वरयोरप्यविशिष्टो मृत्युः, आयुःक्षयाविशेषात्, न चैतावता तयोः प्रागप्यविशेषः, तदन्यहेतुविशेषात्, निदर्शनमात्रमेतदिति पुरुषोत्तमाः ६ ॥

एते च बाह्यार्थसंवादिसत्यवादिभिः साङ्कृत्यैरुपमावैतथ्येन निरुपमस्तवार्हा एवेष्यन्ते,'हीनाधिकाभ्यामुपमा मृषेति' वचनाद्, एतद्व्यवच्छेदार्थमाह—"पुरुषसिंहेभ्य"इति, पुरुषाः प्राग्व्यावर्णितनिरुक्तास्ते सिंहा इव प्रधानशौर्यादिगुणभावेन ख्याताः पुरुषसिंहाः, ख्याताश्च कर्म्मशत्रून् प्रति शूरतया तदुच्छेदनं प्रति क्रौर्येण क्रोधादीन् प्रति असहनतया रागादीन् प्रति वीर्ययोगेन तपःकर्म्म प्रति वीरतया अवज्ञैषां परीषहेषु न भयमुपसर्गेषु न चिन्ताऽपीन्द्रियवर्गे न खेदः संयमाध्वनि निष्प्रकम्पता सद्ध्यान इति, न चैवमुपमा मृषा, तद्द्वारेण तत्त्वतः तदसाधारणगुणाभिधानात्, विनेयविशेषानुग्रहार्थमेतत्, इत्थमेव केषाञ्चिदुक्तगुणप्रतिपत्तिदर्शनात्,



॥ १२ ॥

चित्रो हि सत्त्वानां क्षयोपशमः, ततः कस्यचित्कथञ्चिदाशयशुद्धिभावात्। यथाभव्यं व्यापकश्चानुग्रहविधिः, उपकार्यात्प्रत्युपकारलिप्साऽभावेन महतां प्रवर्त्तनात्, महापुरुषप्रणीतश्चाधिकृतदण्डकः, आदिमुनिभिरर्हच्छिष्यैर्गणधरैः प्रणीतत्वाद्, अत एवैष महागम्भीरः सकलन्यायाकरः भव्यप्रमोदहेतुः परमार्षरूपो निदर्शनमन्येषामिति, न्याय्यमेतद्, यदुत 'पुरुषसिंहा' इति' ७।

एते चाविरुद्धधर्माध्यासितवस्तुवादिभिः सुचारुशिष्यैः विरुद्धोपमाऽयोगेनाभिन्नजातीयोपमार्हा एवाभ्युपगम्यन्ते, 'विरुद्धोपमायोगे तद्धर्मापत्त्या तदवस्तुत्व'मिति वचनाद्, एतद्व्यपोहायाह—"पुरुषवरपुण्डरीकेभ्यः" इति, पुरुषाः पूर्ववत् ते वरपुण्डरीकाणीव संसारजलासङ्गादिना धर्म्मकलापेन पुरुषवरपुण्डरीकाणि, यथा पुण्डरीकाणि पङ्के जातानि जले वर्द्धितानि तदुभयं विहाय वर्त्तन्ते प्रकृतिसुन्दराणि च भवन्ति, निवासो भुवनलक्ष्म्या आयतनं चक्षुराद्यानन्दस्य, प्रवरगुणयोगतो विशिष्टतिर्यन्नरामरैः सेव्यन्ते, सुखहेतूनि भवन्ति च, तथैतेऽपि भगवन्तः कर्म्मपङ्के जाता दिव्यभोगजलेन वर्द्धिताः उभयं विहाय वर्त्तन्ते, सुन्दराश्चातिशययोगेन, निवासो गुणसम्पदः, हेतवो दर्शनाद्यानन्दस्य, केवलादिगुणभावेन भव्यसत्त्वैः सेव्यन्ते, निर्वाणनिबन्धनं च जायन्त इति, नैव भिन्नजातीयोपमायोगेऽप्यर्थतो विरोधाभावेन यथोदितदोषसम्भव इति, एकानेकस्वभावं च वस्तु, अन्यथा तत्तत्त्वासिद्धेः, सत्त्वामूर्त्तत्वचेतनत्वादिधर्म्मरहितस्य जीवत्वाद्ययोग इति न्यायमुद्रा, न सत्त्वमेवामूर्त्तत्वादि, सर्वत्र तत्प्रसङ्गात्, एवं च मूर्त्तत्वाद्ययोगः, सत्त्वविशिष्टताऽपि न, विशेषमन्तरेणातिप्रसङ्गाद्, एवं नाभिन्ननिमित्तत्वादृते विरोध इति पुरुषवरपुण्डरीकाणि ८॥

एते च यथोत्तरं गुणक्रमाभिधानवादिभिः सुरगुरुविनेयैर्हीनगुणोपमायोग एवाधिकगुणोपमार्हा इष्यन्ते, अभिधानक्रमाभावेऽभिधेयमपि तथा, "अक्रमवदसदिति" वचनात्, एतन्निरासायाह—"पुरुषवरगन्धहस्तिभ्य" इति, पुरुषाः पूर्ववदेव, ते वरगन्धह-

गंधहस्तित्वं लोकोत्तमत्वं

स्तिन इव-गजेन्द्रा इव क्षुद्रगजनिराकरणादिना धर्म्मसाम्येन पुरुषवरगन्धहस्तिनः, यथा गन्धहस्तिनां गन्धेनैव तद्देशविहारिणः क्षुद्रशेषगजा भज्यन्ते तद्वदेतेऽपि, परचक्रदुर्भिक्षमारिप्रभृतयः सर्वे एवोपद्रवगजा अचिन्त्यपुण्यानुभावतो भगवद्विहारपवनगन्धादेव भज्यन्त इति, न चैकानेकस्वभावत्वे वस्तुन एवमप्यभिधानक्रमाभावः, सर्वगुणानामन्योऽन्यसंवलितत्वात्, पूर्वानुपूर्व्याद्यभिधेयस्वभावत्वात्, अन्यथा तथाऽभिधानाप्रवृत्तेः, नैवमभिधेयमपि तथा, अक्रमवदसदित्युक्तवद् अक्रमवत्त्वासिद्धेः, क्रमाक्रमव्यवस्थाभ्युपगमाच्च, अन्यथा न वस्तुनिबन्धना शब्दप्रवृत्तिरिति स्तववैयर्थ्यमेव, ततश्चान्धकारनृत्तानुकारी प्रयास इति, पुरुषवरगन्धहस्तिन इति ९ ॥ एवं पुरुषोत्तमसिंहपुण्डरीकगन्धहस्तिधर्म्मातिशययोगत एव एकान्तेनादिमध्यावसानेषु स्तोतव्यसम्पत्तिसिद्धिरिति स्तोतव्यसम्पद एवासाधारणरूपा हेतुसम्पदिति ३ ।

साम्प्रतं 'समुदायेष्वपि प्रवृत्ताः शब्दा अनेकधाऽवयवेष्वपि प्रवर्त्तन्ते' स्तवेष्वप्येवमेव वाचकप्रवृत्तिरिति न्यायसंदर्शनार्थमाह–'लोकोत्तमेभ्य इत्यादि सूत्रपञ्चकम्', इह यद्यपि लोकशब्देन तत्त्वतः पञ्चास्तिकाया उच्यन्ते, 'धर्म्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम् । तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्य ॥१॥ मितिवचनात्, तथाऽप्यत्र लोकध्वनिना सामान्येन भव्यसत्त्वलोक एव गृह्यते, सजातीयोत्कर्ष एवोत्तमत्वोपपत्तेः, अन्यथाऽतिप्रसङ्गः, अभव्यापेक्षया सर्वभव्यानामेवोत्तमत्वात्, एवं च नैषामतिशय उक्तः स्यादिति परिभावनीयोऽयं न्यायः । ततश्च भव्यसत्त्वलोकस्य सकलकल्याणैकनिबन्धनतथाभव्यत्वभावेनोत्तमाः, भव्यत्वं नाम सिद्धिगमनयोग्यत्वम्, अनादिपारिणामिको भावः, तथाभव्यत्वमिति च विचित्रमेतत्, कालादिभेदेनात्मनां बीजादिसिद्धिभावात्, सर्वथा योग्यताऽभेदे तदभावात्, तत्सहकारिणामपि तुल्यत्वप्राप्तेः, अन्यथा योग्यताऽभेदायोगात्, तदुपनि-

पाताक्षेपस्यापि तन्निबन्धनत्वात्, निश्चयनयमतमेतद् अतिसूक्ष्मबुद्धिगम्यमिति लोकोत्तमाः १० ॥

नाथत्वं हितत्वं

तथा "लोकनाथेभ्यः" इति, इह तु लोकशब्देन तथेतरभेदाद्विशिष्ट एव तथा रागाद्युपद्रवरक्षणीयतया बीजाधानादिसंविभक्तो भव्यलोकः परिगृह्यते, अनीदृशि नाथत्वानुपपत्तेः, 'योगक्षेमकृदय'मिति विद्वत्प्रवादः, न तदुभयत्यागाद्, आश्रयणीयोऽपि परमार्थेन तल्लक्षणायोगात्, इत्थमपि तदभ्युपगमेऽतिप्रसङ्गात्, महत्त्वमात्रस्येहाप्रयोजकत्वात्, विशिष्टोपकारकृत एव तत्त्वतो नाथत्वात्, औपचारिकवाग्वृत्तेश्च पारमार्थिकस्तवत्वासिद्धिः, तदिह येषामेव बीजाधानोद्भेदपोषणैर्योगः क्षमं च तत्तदुपद्रवाद्यभावेन त एवेह भव्याः परिगृह्यन्ते, न चैते कस्यचित्सकलभव्यविषये, ततस्तत्प्राप्त्या सर्वेषामेव मुक्तिप्रसङ्गात्, तुल्यगुणा ह्येते प्रायेण, ततश्च चिरतरकालातीतादन्यतरस्माद्भगवतो बीजाधानादिसिद्धेरल्पेनैव कालेन सकलभव्यमुक्तिः स्यात्, बीजाधानमपि ह्यपुनर्बन्धकस्य, न चास्यापि, पुद्गलपरावर्त्तः संसार इतिकृत्वा, तदेवं लोकनाथाः ११ ॥

तथा "लोकहितेभ्यः" इह लोकशब्देन सकलसांव्यवहारिकादिभेदभिन्नः प्राणिलोको गृह्यते, पञ्चास्तिकायात्मको वा सकल एव, एवं चालोकस्यापि लोक एवान्तर्भावः, आकाशास्तिकायस्योभयात्मकत्वात्, लोकादिव्यवस्थानिबन्धनं तूक्तमेव, तदेवंविधाय लोकाय हिताः, यथावस्थितदर्शनपूर्वकं सम्यक्प्ररूपणाचेष्टया तदायत्यबाधनेनेति च, इह यो यं याथात्म्येन पश्यति तदनुरूपं च चेष्टते भाव्यपायपरिहारसारं स तस्मै तत्त्वतो हित इति हितार्थः, इत्थमेव तदिष्टोपपत्तेः, इष्टं च सपरिणामं हितं, स्वादुपथ्यान्नवदतिरोगिणः, अतोऽन्यथा तदनिष्टत्वसिद्धिः, तत्कर्तुरनिष्टाप्तिहेतुत्वेन, अनागमं पापहेतोरपि पापभावात्, इतरेतरापेक्षः कर्तृकर्म्मप्रकारः, नाचेतनाहितयोग उपचरितः, पुनरागमकर्म्मकत्वेन सचेतनस्यापि एवंविधस्यैव नायमिति दर्शनार्थः ॥ कर्तृव्यापारा-

॥१५॥

पेक्षमेव तत्र कर्म्मत्वं, न पुनः स्वविकारापेक्षं, कङ्कडुकपक्तावितथमपि दर्शनादिति लोकहिताः १२ ॥

तथा "लोकप्रदीपेभ्यः" अत्र लोकशब्देन विशिष्ट एव तद्देशनाद्यंशुभिर्मिथ्यात्वतमोऽपनयनेन यथार्हं प्रकाशितज्ञेयभावः संज्ञिलोकः परिगृह्यते, यस्तु नैवंभूतः तत्र तत्त्वतः प्रदीपत्वायोगाद्, अन्धप्रदीपदृष्टान्तेन, यथा ह्यन्धस्य प्रदीपस्तत्त्वतः अप्रदीप एव, तं प्रति स्वकार्याकरणात्, तत्कार्यकृत एव च प्रदीपत्वोपपत्तेः, अन्यथाऽतिप्रसङ्गात्, अन्धकल्पश्च यथोदितलोकव्यतिरिक्तस्तदन्यलोकः, तद्देशनाद्यंशुभ्योऽपि तत्त्वोपलम्भाभावात्, समवसरणेऽपि सर्वेषां प्रबोधाश्रवणात्, इदानीमपि तद्वचनतः प्रबोधादर्शनात्, तदभ्युपगमवतामपि तथाविधलोकदृष्टयनुसारप्राधान्याद्, अनपेक्षितगुरुलाघवं तत्त्वोपलम्भशून्यप्रवृत्तिसिद्धेरिति, तदेवंभूतं लोकं प्रति भगवन्तोऽपि अप्रदीपा एव, तत्कार्याकरणादित्युक्तमेतत्, न चैवमपि भगवतां भगवत्त्वायोगः, वस्तुस्वभावविषयत्वादस्य, तदन्यथाकरणे तत्तत्त्वायोगात्, स्वो भावः स्वभावः-आत्मीया सत्ता, स च अन्यथा चेति व्याहतमेतत्, किंच—एवमचेतनानामपि चेतनाऽकरणे समानमेतदित्येवमेव भगवत्त्वायोगः, इतरेतरकरणेऽपि स्वात्मन्यपि तदन्यविधानात्, यत्किञ्चिदेतदिति, यथोदितलोकापेक्षयैव लोकप्रदीपाः १३ ॥

तथा "लोकप्रद्योतकरेभ्यः" इह यद्यपि लोकशब्देन प्रक्रमाद् भव्यलोक उच्यते, 'भव्यानामालोको वचनांशुभ्योऽपि दर्शनं यस्मात्। एतेषां भवति तथा तदभावे व्यर्थ आलोकः॥१॥' इति वचनात् तथाऽप्यत्र लोकध्वनिनोत्कृष्टमतिः भव्यसत्त्वलोक एव गृह्यते, तत्रैव तत्त्वतः प्रद्योतकरणशीलत्वोपपत्तेः, अस्ति च चतुर्दशपूर्वविदामपि स्वस्थाने महान् दर्शनभेदः, तेषामपि परस्परं पट्स्थानपतितत्वश्रवणात्, न चायं सर्वथा प्रकाशाभेदे, अभिन्नो ह्येकान्तेनैकस्वभावः, तन्नास्य दर्शनभेदहेतुतेति, स हि येन स्वभावे-

द्योतकराभ्यामुपमा

नैकस्य सहकारी तत्तुल्यमेव दर्शनमकुर्वन्न तेनवापरस्य, तत्तत्त्वविरोधादिति भावनीयं, इतरेतरापेक्षो हि वस्तुस्वभावः, तदायत्ता च फलसिद्धिरिति, उत्कृष्टचतुर्दशपूर्वविल्लोकम्वाधिकृत्य प्रद्योतकरा इति लोकप्रद्योतकराः १४। प्रद्योत्यं तु सप्तप्रकारं जीवादितत्त्वं, सामर्थ्यगम्यमेतत्, तथाशाब्दन्यायात्, अन्यथा अचेतनेषु प्रद्योतनायोगः, प्रद्योतनं प्रद्योत इति भावसाधनस्यासम्भवात्, अतो ज्ञानयोग्यतैवेह प्रद्योतनमन्यापेक्षयेति, तदेवं स्तवेष्वपि एवमेव वाचकप्रवृत्तिरिति स्थितम्। एतेन "स्तवेऽपुष्कलशब्दः प्रत्यवायाय" इति प्रत्युक्तं, तत्त्वेनदशस्यापुष्कलत्वायोगादिति लोकप्रद्योतकराः १४। एवं लोकोत्तमतया लोकनाथभावतो लोकहितत्वसिद्धेर्लोकप्रदीपभावात् लोकप्रद्योतकरत्वेन परार्थकरणात् स्तोतव्यसम्पद एव सामान्येनोपयोगसम्पदिति ४।

साम्प्रतं भवनिर्वेदद्वारेणार्थतो भगवद्बहुमानादेव विशिष्टकर्म्मक्षयोपशमभावाद् अभयादिधर्म्मसिद्धिस्तद्व्यतिरेकेण नैःश्रेयसधर्म्मासम्भवाद्, भगवन्त एव तथा तथा सत्त्वकल्याणहेतव इति प्रतिपादयन्नाह—अभयदयाणमित्यादिसूत्रपञ्चकं, इह भयं सप्तधा—इहपरलोकाऽऽदानाकस्मादाजीवमरणाश्लाघाभेदेन, एतत्प्रतिपक्षतोऽभयमिति-विशिष्टमात्मनः स्वास्थ्यं, निःश्रेयसधर्म्मभूमिकानिबन्धनभूता धृतिरित्यर्थः, न ह्यस्मिन्नसति यथोदितधर्म्मसिद्धिः, सन्निहितभयोपद्रवैः प्रकामं चेतसोऽभिभवात्, चेतःस्वास्थ्यसाध्यश्चाधिकृतो धर्म्मः,तत्स्वभावत्वात्, विरुद्धश्च भयपरिणामेन, तस्य तथाऽस्वास्थ्यकारित्वात्, अतोऽस्य गुणप्रकर्षरूपत्वात् अचिन्त्यशक्तियुक्तत्वात् तथाभावेनावस्थितेः सर्वथा परार्थकरणात् भगवद्भ्य एव सिद्धिरिति। तदित्थंभूतमभयं ददतीत्यभयदाः १५॥

तथा 'चक्खुदयाणं' इह चक्षुः चक्षुरिन्द्रियं, तच्च द्विधा-द्रव्यतो भावतश्च, द्रव्येन्द्रियं—बाह्यनिर्वृत्तिसाधकतमकरणरूपं "निर्वृत्त्युपकरणे द्रव्येन्द्रिय" (तत्त्वार्थे अ० २ सू० १७) मितिवचनात्, भावेन्द्रियं तु क्षयोपशम उपयोगश्च, "लब्ध्युपयोगौ भावेन्द्रिय"-

(तत्त्वार्थे अ० २ सू० १८) मितिवचनात्, तदत्र चक्षुः—विशिष्टमेवात्मधर्म्मरूपं तत्त्वावबोधनिबन्धनश्रद्धास्वभावं गृह्यते, श्रद्धाविहीनस्याचक्षुष्मत इव रूपमिव तत्त्वदर्शनायोगात्, न चेयं मार्ग्गानुसारिणी सुखमवाप्यते,सत्यां चास्यां भवत्येतन्नियोगतः कल्याणचक्षुषीव सद्रूपदर्शनं, न ह्यत्र प्रतिबन्धो नियमेन ऋते कालादिति निपुणसमयविदः, अयं चाप्रतिबन्ध एव, तथा तद्भवनोपयोगित्वात्, तमन्तरेण तत्सिद्धयसिद्धेः, विशिष्टस्योपादानहेतोरेव तथापरिणतिस्वभावत्वात्, तदेपाऽवन्ध्यबीजभूता धर्म्मकल्पद्रुमस्येति परिभावनीयं। इयं चेह चक्षुरिंद्रियं चोक्तवद्भगवद्भ्य इति चक्षुर्ददतीति चक्षुर्दाः १६ ॥

तथा 'मग्गदयाणं' इह मार्ग्गः—चेतसोऽवक्रगमनं, भुजङ्गमनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही क्षयोपशमविशेपः, हेतुस्वरूपफलशुद्धा सुखेत्यर्थः, नास्मिन्नान्तरेऽसति यथोदितगुणस्थानावाप्तिः, मार्गविपमतया चेतःस्खलनेन प्रतिबन्धोपपत्तेः, सानुबन्धक्षयोपशमतो यथोदितगुणस्थानावाप्तिः, अन्यथा तदयोगात्, क्लिष्टदुःखस्य तत्र तत्त्वतो बाधकत्वात्, सानुबन्धं क्लिष्टमेतदिति तन्त्रगर्भः, तद्बाधितस्यास्य तथागमनाभावात्, भूयस्तदनुभवोपपत्तेः, न चासौ तथाऽतिसङ्क्लिष्टस्तत्प्राप्ताविति प्रवचनपरमगुह्यं, न खलु भिन्नग्रन्थेर्भूयस्तद्बन्ध इति तन्त्रयुक्त्युपपत्तेः, एवमन्यनिवृत्तिगमनेनास्य भेदः, सिद्धं चैतत् प्रवृत्त्यादिशब्दवाच्यतया योगाचार्याणां, 'प्रवृत्तिपराक्रमजयानन्दऋतम्भरभेदः कर्म्मयोग' इत्यादिविचित्रवचनश्रवणादिति, न चेदं यथोदितमार्गाभावे, स चोक्तवद्भगवद्भ्य इति मार्ग्गं ददतीति मार्ग्गदाः १७ ॥


तथा "सरणदयाणं" इह शरणं—भयार्त्तत्राणं, तच्च संसारकान्तारगतानां अतिप्रबलरागादिपीडितानां दुःखपरम्परासङ्क्लेशविक्षोभतः समास्वा(श्वा)सनस्थानकल्पं, तत्त्वचिन्तारूपमध्यवसानं, विविदिपेत्यर्थः, सत्यां चास्यां तत्त्वगोचराः शुश्रूषा[1]श्रवण[2]ग्रह-
॥ १८ ॥

ण[3]धारणा[4]विज्ञानो[5]हा[6]पोह[7]तत्त्वाभिनिवेशाः[8] प्रज्ञागुणाः, प्रतिगुणमनन्तपापपरमाण्वपगमेनैते इति समयवृद्धाः। तदन्येभ्यस्तत्त्वज्ञानायोगात्, तदाभासतयैतेषां भिन्नजातीयत्वात्, बाह्याकृतिसाम्येऽपि फलभेदोपपत्तेः, सम्भवन्ति तु वस्त्वन्तरोपायतया, तद्विविदिषामन्तरेण न पुनः स्वार्थसाधकत्वेन भावसाराः, अन्येषां प्रबोधविप्रकर्षेण प्रबलमोहनिद्रोपेतत्वाद्, उक्तं चैतदन्यैरप्यध्यात्मचिन्तकैः, यदाहावधूताचार्यः—"नाप्रत्ययानुग्रहमन्तरेण तत्त्वशुश्रूषादयः, उदकपयोऽमृतकल्पज्ञानाजनकत्वात्, लोकसिद्धास्तु सुप्तनृपाख्यानकगोचरा इवान्यार्था एवेति" विषयतृडपहार्येव हि ज्ञानं विशिष्टकर्म्मक्षयोपशमजं, नान्यद्, अभक्ष्यास्पर्शनीयन्यायेनाज्ञानत्वात्, न चेदं यथोदितशरणाभावे, तच्च पूर्ववद्भगवद्भ्य इति शरणं ददतीति शरणदाः १८ ॥

तथा "बोहिदयाणं", इह बोधिः—जिनप्रणीतधर्म्मप्राप्तिः, इयं पुनर्यथाप्रवृत्तापूर्वानिवृत्तिकरणत्रयव्यापाराभिव्यङ्ग्यमभिन्नपूर्वग्रन्थिभेदतः पश्चानुपूर्व्या प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं, सम्यग्दर्शनं विज्ञप्तिरित्यर्थः, पञ्चकमप्येतदपुनर्बन्धकस्य यथोदितस्य, अस्य पुनर्बन्धके स्वरूपेणाभावात्, इतरेतरफलमेतदिति नियमः, अनीदृशस्य तत्त्वायोगात्, न ह्यचक्षुष्फलमभयं, चक्षुर्वाऽमार्ग्गफलमित्यादि, एवं चोत्कृष्टस्थितेरा ग्रन्थिप्राप्तिमेते भवन्तोऽप्यसकृन्न तद्रूपतामासादयन्ति, विवक्षितफलयोग्यतावैकल्यात्, योग्यता चाफलप्राप्तेस्तथा क्षयोपशमवृद्धिः लोकोत्तरभावामृतास्वादरूपा वैमुख्यकारिणी विषयविषाभिलाषस्य, न चेयमपुनर्बन्धकमन्तरेणेति भावनीयं, इष्यते चैतदपरैरपि मुमुक्षुभिः, यथोक्तं भगवद्गोपेन्द्रेण—" निवृत्ताधिकारायां प्रकृतौ धृतिः श्रद्धा सुखा विविदिषा विज्ञप्तिरिति तत्त्वधर्म्मयोनयः, नानिवृत्ताधिकारायां, भवन्तीनामपि तद्रूपताऽयोगादिति" विज्ञ- 
प्तिश्च बोधिः, प्रशमादिलक्षणाभेदात्, एतत्प्राप्तिश्च यथोक्तप्रपञ्चतो भगवद्भ्य एवेति बोधिं ददतीति बोधिदाः १९ ॥

एवमभयदानचक्षुर्दानमार्गदानशरणदानबोधिदानेभ्य एव यथोदितोपयोगसिद्धेरुपयोगसम्पद एव हेतुसम्पदिति ५ ॥

धर्मदा धर्मदेशकाः

सद्देशयनायोग्यताविधाय्यनुग्रहसम्पादनादिना तात्त्विकधर्म्मदातृत्वादिप्रकारेण परमशास्तृत्वसम्पत्समन्विता भगवन्त इति न्यायतः प्रतिपादयन्नाह–"धम्मदयाणमित्यादिसूत्रपञ्चकं," इह धर्म्मः चारित्रधर्मः परिगृह्यते, स च श्रावकसाधुधर्म्मभेदेन द्विधा, श्रावकधर्म्मोऽणुव्रताद्युपासकप्रतिमागतक्रियासाध्यः साधुधर्म्माभिलापाशयरूपः आत्मपरिणामः, साधुधर्म्मः पुनः सामायिकादिगतविशुद्धक्रियाभिव्यङ्ग्यः सकलसत्त्वहिताशयाऽमृतलक्षणः स्वपरिणाम एव, क्षायोपशमिकादिभावस्वरूपत्वाद्धर्म्मस्य, नायं भगवदनुग्रहमन्तरेण, विचित्रहेतुप्रभवत्वेऽपि महानुभावतयाऽस्यैव प्राधान्यात्, भवत्येवैतदासन्नस्य भगवति बहुमानः, ततो हि सद्देशनायोग्यता, ततः पुनरयं नियोगतः इत्युभयतत्स्वभावतया तदाधिपत्यसिद्धेः, कारणे कार्योपचाराद्धर्म्मं ददतीति धर्मदाः २० ॥

तथा 'धर्मदेसयाणं' तत्र धर्म्मः–प्रस्तुत एव तं यथाभव्यमभिदधति, तद्यथा–प्रदीप्तगृहोदरकल्पोऽयं भवो, निवासः शारीरादिदुःखानां, न युक्त इह विदुषः प्रमादः, यतः अतिदुर्लभेयं मानुष्यावस्था, प्रधानं परलोकसाधनं, परिणामकटवो विषयाः, विप्रयोगान्तानि सत्सङ्गतानि, पातभयातुरमविज्ञातपातमायुः, तदेवं व्यवस्थिते विध्यापनेऽस्य यतितव्यं, एतच्च सिद्धान्तवासनासारो धर्मगेघो यदि परं विध्यापयति, अतः स्वीकर्त्तव्यः सिद्धान्तः, सम्यक् सेवितव्यास्तदभिज्ञाः, भावनीयं मुण्डमालालुकाज्ञातं, त्यक्तव्या खल्वसदपेक्षा, भवितव्यमाज्ञाप्रधानेन, उपादेयं प्रणिधानं, पोषणीयं साधुसेवया धर्म्मशरीरं, रक्षणीयं प्रवचनमालिन्यम्, एतच्च विधिप्रवृत्तः सम्पादयति, अतः सर्वत्र विधिना प्रवर्त्तितव्यं सूत्रात्, ज्ञातव्य आत्मभावः, प्रवृत्तावपेक्षितव्यानि निमित्तानि, यतितव्यमसम्पन्नयोगेषु, लक्षयितव्या विस्रोतसिका, प्रतिविधेयमनागतमस्याः भयशरणाद्युदाहरणेन, भवत्येवं सोपक्रमकर्म्मनाशः

निरुपक्रमानुबन्धव्यवच्छित्तिरित्येवं धर्म्मं देशयन्तीति धर्म्मदेशकाः २१ ॥

तथा "धम्मनायगाणं" इह धर्मः—अधिकृत एव, तस्य स्वामिनः, तल्लक्षणयोगेन, तद्यथा—तद्वशीकरणभावात्[1] तदुत्तमावाप्तेः[2] स्तत्फलपरिभोगा[3] त्तद्विघातानुपपत्तेः[4], तथाहि—एतद्वशिनो भगवन्तः विधिसमासादनेन १ विधिनाऽयमाप्तो भगवद्भिः, तथा निरतिचारपरिपालनतया २, पालितश्चातिचारविरहेण, एवं यथोचितदानतो ३ दत्तश्च यथाभव्यं, तथा तत्रापेक्षाभावेन ४, नामीषां दाने वचनापेक्षा (१,) एवं च तदुत्तमावाप्तयश्च भगवन्तः, प्रधानक्षायिकधर्म्मावाप्त्या १ तीर्थकरत्वात्प्रधानोऽयं भगवतां, तथा परार्थसम्पादनेन २ सत्त्वार्थकरणशीलतया, एवं हीनेऽपि प्रवृत्तेः, अश्वबोधाय गमनाकर्णनात्, तथा तथाभव्यत्वयोगात् अत्युदारमेतदेतेषाम् (२)। एवं तत्फलपरिभोगयुक्ताः सकलसौन्दर्येण, निरुपमं रूपादि भगवतां, तथा प्रातिहार्ययोगात्, नान्येषामेतत्, एवं उदारद्धर्यनुभूतेः, समग्रपुण्यसम्भारजेयं, तथा तदाधिपत्यतो भावात्, न देवानां स्वातन्त्र्येण (३) एवं तद्विघातरहिताः, अवन्ध्यपुण्यबीजत्वात्, एतेषां स्वाश्रयपुष्टमेतत्, तथा अधिकानुपपत्तेः, नातोऽधिकं पुण्यं, एवं पापक्षयभावात्, निर्दग्धमेतत्, तथाऽहेतुकविघातासिद्धेः सदा सत्त्वादिभावेन (४)। एवं धर्मस्य नायका धर्म्मनायका इति २२ ॥

तथा—'धम्मसारहीणं' इहापि धर्म्मोऽधिकृत एव, तस्य स्वपरापेक्षया सम्यक् प्रवर्त्तन[1] पालन[2] दमन[3] योगतः सारथित्वं, तद्यथा—सम्यक् प्रवर्त्तनयोगेन परिपाकापेक्षणात् प्रवर्त्तकज्ञानसिद्धेः (१) अपुनर्बन्धकत्वात् प्रकृत्याभिमुख्योपपत्तेस्तथा गाम्भीर्ययोगात् साधुसहकारिप्राप्तेरनुबन्धप्रधानत्वात् अतीचारभीरुत्वोपपत्तेः, एतेन पालनाऽयोगः प्रत्युक्तः, सम्यक्प्रवर्त्तनस्य निर्वहणफलत्वात्, नान्यथा सम्यक्त्वमिति समयविदः (२)। एवं दमनयोगेन, दान्तो ह्येवं धर्म्मः कर्म्मवशितया, कृतोऽव्यभिचारी अनिवर्त्तकभावेन, नियुक्तः



॥ २१ ॥

स्वकार्ये, स्वाङ्गोपचयकारितया नीतः स्वात्मीभावं, तत्प्रकर्षस्यात्मरूपत्वेन, भावधर्म्मासौ हि भवत्येवैतदेवं, तदाद्यस्थानस्याप्येवंप्रवृत्तेरवन्ध्यबीजत्वात्, सुसंवृतकाञ्चनरत्नकरण्डकप्राप्तितुल्या हि प्रथमधर्मस्थानप्राप्तिरित्यन्यैरप्यभ्युपगमात्, तदेवं धर्म्मस्य सारथयो धर्म्मसारथयः २३ ॥

तथा "धम्मवरचाउरंतचक्कवट्टीणं" धर्म्मोऽधिकृत एव, स एव वरं–प्रधानं, चतुरन्तहेतुत्वात् चतुरन्तं, चक्रमिव चक्रं, तेन वर्त्तितुंशीलं येषां ते तथाविधाः,इदमत्र हृदयम्-यथोदितधर्म्म एव वरं-प्रधानं चक्रवर्तिचक्रापेक्षया लोकद्वयोपकारित्वेन कपिलादिप्रणीतधर्म्मचक्रापेक्षया वा त्रिकोटिपरिशुद्धतया चत्वारो-गतिविशेषाः नारकतिर्यग्नरामरलक्षणाः तदुच्छेदेन तदन्तहेतुत्वाच्चतुरन्तं, चतुर्भिर्वाऽन्तो यस्मिंस्तच्चतुरन्तं, कैश्चतुर्भिः ?-दानशीलतपोभावनाख्यैर्द्धर्म्मैः, अन्तः प्रक्रमाद्भवान्तोऽभिगृह्यते, चक्रमिव चक्रम् अतिरौद्रमहामिथ्यात्वादिलक्षणभावशत्रुलवनात्, तथा च लूयन्त एवानेन भावशत्रवो मिथ्यात्वादय इति प्रतीतं, दानाद्यभ्यासादाग्रहनिवृत्त्यादिसिद्धेः, महात्मनां स्वानुभवसिद्धमेतत्, एतेन च वर्त्तन्ते भगवन्तः तथाभव्यत्वनियोगतो वरबोधिलाभादारभ्य तथातथौचित्येन, आसिद्धिप्राप्तेः एवमेव वर्त्तनादिति, तदेवमेतेन वर्त्तितुं शीला धर्मवरचतुरन्तचक्रवर्त्तिनः २४॥ एवं धर्म्मदत्व–धर्म्मदेशकत्व–धर्म्मनायकत्व–धर्म्मसारथित्व–धर्म्मवरचतुरन्तचक्रवर्त्तित्वैर्विशेषोपयोगसिद्धेः स्तोतव्यसम्पद एव विशेषेणोपयोगसम्पद् इति ६॥

एते च कैश्चिदिष्टतत्त्वदर्शनवादिभिर्बौद्धभेदैरन्यत्र प्रतिहतवरज्ञानदर्शनधरा एवेष्यन्ते " तत्त्वमिष्टं तु पश्यतु " इतिवचनाद्,
॥ २२ ॥ एतन्निराचिकीर्षयाऽऽह–" अप्रतिहतवरज्ञानदर्शनधरेभ्यः " अप्रतिहते–सर्वत्राप्रतिस्खलिते क्षायिकत्वाद् वरे–प्रधाने ज्ञानद- ॥ २२ ॥
र्शने–विशेषसामान्यावबोधरूपे धारयन्तीति समासः, सर्वज्ञानदर्शनस्वभावत्वे निरावरणत्वेन, अन्यथा तत्त्वायोगात्, सर्वज्ञस्वभा-

अप्रतिहत-ज्ञानाः व्यावृत्तछ-द्मानः

वत्वं च सामान्येन सर्वावबोधसिद्धेः,विशेषाणामपि ज्ञेयत्वेन ज्ञानगम्यत्वात्, न चैतें साक्षात्कारमन्तरेण गम्यन्ते, सामान्यरूपानतिक्रमात्, निरावरणत्वं चावरणक्षयात्, क्षयी च प्रतिपक्षसेवनया तत्तानवोपलब्धेः, तत्क्षये च सर्वज्ञानं, तत्स्वभावत्वेन, दृश्यते चावरणहानिसमुत्थो ज्ञानातिशयः, न चास्य कश्चिदविषय इति स्वार्थानतिलङ्घनमेव, इत्थं चैतद्, अन्यथा अविकलपरार्थसम्पादनासम्भवः, तदन्याशयाद्यपरिच्छेदादिति सूक्ष्मधिया भावनीयं, ज्ञानग्रहणं चादौ सर्वा लब्धयः साकारोपयोगोपयुक्तस्येति ज्ञापनार्थमिति अप्रतिहतवरज्ञानदर्शनधराः २५ ॥

एतेऽप्याजीविकनयमतानुसारिभिर्गोशालशिष्यैस्तत्त्वतः खल्वव्यावृत्तच्छद्मान एवेष्यन्ते "तीर्थनिकारदर्शनादागच्छन्तीति" वचनाद्, एतन्निवृत्त्यर्थमाह—'**वियट्टछउमाणं**' व्यावृत्तच्छद्मभ्यः, छादयतीति छद्म—घातिकर्म्माभिधीयते ज्ञानावरणादि, तद्बन्धयोग्यतालक्षणश्च भवाधिकार इति, असत्यस्मिन् कर्म्मयोगाभावात्, अत एवाहुरपरे—"असहजाऽविद्ये"ति, व्यावृत्तं छद्म येषां ते तथाविधा इति विग्रहः, नाक्षीणे संसारेऽपवर्गः, क्षीणे च न जन्मपरिग्रह इत्यसत्, हेत्वभावेन सदा तदापत्तेः, न तीर्थनिकारो हेतुः, अविद्याऽभावेन तत्संभवाभावात्, तद्भावे च छद्मस्थास्ते, कुतस्तेषां केवलमपवर्गो वेति? भावनीयमेतत्, न चान्यथा भव्योच्छेदेन संसारशून्यतेत्यसदालम्बनं ग्राह्यं, आनन्त्येन भव्योच्छेदासिद्धेः, अनन्तानन्तकस्यानुच्छेदरूपत्वाद्,अन्यथा सकलमुक्तिभावेनेष्टसंसारिवदुपचरितसंसारभाजः सर्वसंसारिण इति बलादापद्यते, अनिष्टं चैतदिति, व्यावृत्तच्छद्मान इति २६ ॥

एवमप्रतिहतवरज्ञानदर्शनधरत्वेन व्यावृत्तच्छद्मतया चैतद्रूपत्वात् स्तोतव्यसम्पद एव सकारणा स्वरूपसम्पदिति ७॥

एतेऽपि कल्पिताविद्यावादिभिस्तत्त्वान्तवादिभिः परमार्थेनाजिनादय एवेष्यन्ते "भ्रान्तिमात्रमसदविद्येति" वचनाद्, एतद्व्य-


॥ २३ ॥

जिनजापकाः तीर्णतारकाः

पोहायाह-"जिणाणं जावयाणं"जिनेभ्यो जापकेभ्यः, तत्र रागद्वेषकषायेन्द्रियपरीषहोपसर्गघातिकर्म्मजेतृत्वाज्जिनाः, न खल्वेषामसतां जयः, असत्त्वादेव हि सकलव्यवहारगोचरातीतत्वेन जयविषयताऽयोगात्, भ्रान्तिमात्रकल्पनाऽप्येषामसङ्गतैव, निमित्तमन्तरेण भ्रान्तेरयोगात्, न चासदेव निमित्तम्, अतिप्रसङ्गात्, चितिमात्रादेव तु तदभ्युपगमेऽनुपरम इत्यनिर्मोक्षप्रसङ्गः, तथापि तदसत्त्वेऽनुभववाधा, न हि मृगतृष्णिकादावपि जलाद्यनुभवोऽनुभवात्मनाऽप्यसन्नेव, आविद्वदङ्गनादि सिद्धमेतत्, न चायं पुरुषमात्रनिमित्तः, सर्वत्र सदाऽभावानुपपत्तेः, नैवं चितिमात्रनिबन्धना रागादय इति भावनीयम्, एवं च तथाभव्यत्वादिसामग्रीसमुद्भूतचरणपरिणामतो रागादिजेतृत्वादिना तात्त्विकजिनादिसिद्धिः २७ ॥

एते चावर्त्तकालकारणवादिभिरनन्तशिष्यैर्भावतोऽतीर्णादय एवेष्यन्ते "काल एव कृत्स्नं जगदावर्त्तयती" तिवचनाद्, एतन्निरासायाह-"तीर्णेभ्यस्तारकेभ्यः" ज्ञानदर्शनचारित्रपोतेन भवार्णवं तीर्णवन्तस्तीर्णाः, नैतेषां जीवितावर्त्तवद्भवावर्त्तो, निबन्धनाभावात्, न ह्यस्यायुष्कान्तरवद्भवाधिकारान्तरं, तद्भावेऽत्यन्तमरणवन्मुक्त्यसिद्धेः, तत्सिद्धौ च तद्भावेन भवनाभावः, हेत्वभावात्, न हि मृतः तद्भावेन भवति, मरणभावविरोधात्, एतेन ऋत्वावर्त्तनिदर्शनं प्रत्युक्तं, न्यायानुपपत्तेः, तदावृत्तौ तदवस्थाभावेन परिणामान्तरायोगात्, अन्यथा तस्यावृत्तिरित्ययुक्तं, तस्य तदवस्थानिबन्धनत्वात्, अन्यथा तदहेतुकत्वोपपत्तेः, एवं न मुक्तः पुनर्भवे भवति, मुक्तत्वविरोधात्, सर्वथा भवाधिकारनिवृत्तिरेव मुक्तिरिति, तद्भावेन भावतस्तीर्णादिसिद्धिः २८ ॥

एतेऽपि परोक्षज्ञानवादिभिर्मीमांसकभेदैर्नीत्या अबुद्धादय एवेष्यन्ते, "अप्रत्यक्षा च नो बुद्धिः, प्रत्यक्षोऽर्थः" इति वचनाद्, एतद्व्यवच्छेदार्थमाह-"बुद्धेभ्यः बोधकेभ्यः" अज्ञाननिद्राप्रसुप्ते जगत्यपरोपदेशेन जीवाजीवादिरूपं तत्त्वं बुद्धवन्तो बुद्धाः, स्वसं-

विदितेन ज्ञानेन, अन्यथा बोधायोगात्, नास्वसंविदिताया बुद्धेरवगमे कश्चिदुपायः, अनुमानादिबुद्धेरविषयत्वात्, न ज्ञानव्यक्तिविषयः, तदा तदसत्त्वात्, न तत्सामान्यं, तदात्मकत्वात्, न च व्यक्त्यग्रहे तद्ग्रह इत्यपि चिन्त्यं, नार्थप्रत्यक्षता लिङ्गं, यत्प्रत्यक्षपरिच्छेद्योऽर्थ एवार्थप्रत्यक्षता, प्रत्यक्षकर्मरूपतामापन्नोऽर्थ एव,न चेयमस्य विशिष्टावस्था विशेषणाप्रतीतौ प्रतीयत इति परिभावनीयम् ॥ एवं चेन्द्रियवदज्ञातस्वरूपैवेयं स्वकार्यकारिणीत्यप्ययुक्तमेव, तत्कार्यप्रत्यक्षत्वेन वैधर्म्याद्, अतोऽर्थप्रत्यक्षताऽर्थपरिच्छेद एवेति नीत्या बुद्धादिसिद्धिः २९ ॥

एतेऽपि जगत्कर्तृलीनमुक्तवादिभिः सन्तपनविनेयैस्तत्त्वतोऽमुक्तादय एवेष्यन्ते, "ब्रह्मवद्ब्रह्मसङ्गतानां स्थिति" रिति वचनाद्, एतन्निराचिकीर्षयाऽऽह-"मुत्ताणं मोयगाणं"मुक्तेभ्यो मोचकेभ्यः,चतुर्गतिविपाकचित्रकर्म्मबन्धमुक्तत्वान्मुक्ताः,कृतकृत्या निष्ठितार्था इति योऽर्थः, न जगत्कर्त्तरि लये निष्ठितार्थत्वं, तत्करणेन कृतकृत्यत्वायोगात्, हीनादिकरणे चेच्छाद्वेषादिप्रसङ्गः, तद्व्यतिरेकेण तथाप्रवृत्त्यसिद्धेः, एवं सामान्यसंसारिणोऽविशिष्टतरं मुक्तत्वमिति चिन्तनीयं, निमित्तकर्तृत्वाभ्युपगमे तु तत्त्वतोऽकर्तृत्वं, स्वातन्त्र्यासिद्धेः, न च द्वयोरेकीभावोऽन्यतराभावप्रसङ्गात्, न सत्तायाः सत्तान्तरप्रवेशोऽनुपचयः, उपचये च सैव सेत्ययुक्तं, तदन्तरमासन्नः स इति नीतिः, नैवमन्यस्यान्यत्र लय इति मोहविषप्रसरकटकबन्धः, तदेवं निमित्तकर्तृत्वपरभावनिवृत्तिभ्यां तत्त्वतो मुक्तादिसिद्धिः ३० ॥ एवं जिनजापकतीर्णतारकबुद्धबोधकमुक्तमोचकभावेन स्वपरहितसिद्धेरात्मतुल्यपरफलकर्तृत्वसम्पदिति ८॥

एतेऽपि बुद्धियोगज्ञानवादिभिः कापिलैरसर्वज्ञा असर्वदर्शिनश्चेष्यन्ते,"बुद्ध्याध्यवसितमर्थं पुरुषश्चेतयते" इति वचनाद्,एतन्निराकरणायाह-"सर्वज्ञेभ्यः सर्वदर्शिभ्यः" सर्वं जानन्तीति सर्वज्ञाः,सर्वं पश्यन्तीति सर्वदर्शिनः,तत्स्वभावत्वे सति निरावरणत्वात्,मत्तो-

जणम्मि ॥२५६॥ संभोइयाइभेओ नत्थि गिहत्थाण तेण जो सत्तो। अविसेसेण पयच्छइ असमत्थो देइ उवएसं ॥२५७॥ एवं वत्थाईणंवि दाणे गिहिणो विही इमो चेव। तुच्छो पणमिय गुरुणो तप्परिवारस्स वा देइ ॥२५८॥ एसो अविसेसेणं दाउमसत्तोत्ति धम्मसूरीणं। दुप्पडियारत्तणओ विसेसओ पूयणिज्जाणं ॥२५९॥ देइ विसेसेणेसिं तप्परिवारस्स वावि गुणनिहिणो। अह उवगरणं गुरुणोवि अत्थि परेसिं च तं नत्थि ॥२६०॥ तो तेसि तं पयच्छइ अह दोण्हं नत्थि तत्थ दायव्वं। लद्धिविहीणाणं चिय अह लद्धिविवज्जिया दोवि ॥२६१॥ तो गुरुणो च्चिय देयं इहरा दोसा विवेगविरहाओ। आणाभंगऽणवत्थामिच्छत्तविराहणाईया ॥२६२॥ अहऽतुच्छो पुण दोण्हं संतेऽसंते व लद्धिजुत्ताणं। लद्धीएँ विउत्ताण व तुल्लगुणाणंपि समणाणं ॥२६३॥ जइ देज्जा दरवज्जिय तो तस्स ममत्तदूसियमणस्स। अविवेइणो य धणियं सम्मं गुणभत्तिसुन्नस्स ॥२६४॥ नियमेण होंति दोसा आणाभंगाणवत्थमाईया। एत्तोच्चिय भणियमिणं जयजीवहिए जिणमयम्मि ॥२६५॥ सव्वेसुं सइ विभवे साहूणं वत्थमाइ दायव्वं। गुणवंताण विसेसा दिसाए तत्थवि न जेसऽत्थि॥ तत्रापि येषां साधूनां वस्त्रादि नास्ति तेभ्यो देयमित्यर्थः ॥२६६॥ तथा- संतं वज्झमाणिच्चं ठाणे दाणंपि जो न वियरेइ। इय खुड्डगो कहं सो सीलं अइदुद्धरं धरइ ? ॥२६७॥ दिसाविवरणायाह-दीसइ जीए सीसो सेहदिसा सूरिमाइया नेया। जह एस अमुगसीसो तदंतिए बोहिलाभाओ ॥२६८॥ आभव्वाविक्खाए दिसा गिहत्थाण आगमे भणिया। पव्वज्जाभिमुहाणं मुक्कवयाणं च नऽन्नेसिं॥२६९॥ जो पव्वइउं इच्छइ सामाइयमाइसुत्तपाढी य। सो चरणुज्जय गुरुणो तिन्नि समा तदुवरिं भयणा ॥२७०॥ तथा-

परलिंगिनिण्हए व सम्मदंसणजढे उ उवसंते । तद्दिवसमेव इच्छा सम्मत्तजुए समा तिन्नि ॥२७१॥ मुक्कवओ पुण दुविहो सारूवी होइ तह गिहत्थो य । तत्थ य रयहरणवज्जिय जइवेसधरो उ सारूवी ॥ २७२ ॥ किंच- मुंडसिरो सियवत्था सभज्जऽभज्जो व मुक्ककच्छो य। पत्तेहि भमइ भिक्खं अबंभयारी य सारूवी ॥२७३॥ सो जाजीवं गुरुणो तेण य मुंडीकयाणिवि तहेव । तेणेव बोहियाणं अमुंडियाणं पुणो इच्छा ॥ २७४ ॥ अणवच्चे सेसविही पुव्वायरियस्स तस्सऽवच्चाइ । आभव्वाइं नियमा मुंडिय इयराइं नऽन्नस्स ॥ २७५ ॥ जो पुण गिहत्थमुंडो अहव अमुंडो उ तिण्ह वरिसाण । आरेणं पव्वावे सयं च पुव्वायरिय सव्वे ॥ २७६ ॥ भरहस्स पुव्वजम्मो आहरणं होइ साहुणो दाणे । गिहिणो धणसत्थवइदिट्ठंतो जुन्नसेट्ठी वा ॥ २७७ ॥ हरिण वणछेइणो वा अहवा गामस्स चिंतगो पुरिसो । कयउन्नसालिभद्दा दाणफले अहव दिट्ठंता ॥ २७८ ॥ भरहेणं पुव्वभवे वेयावच्चं कयं सुविहियाणं। तो तस्स पभावेणं जाओ भरहाहिवो राया ॥ २७९ ॥ लद्धूण केवलसिरिं लक्खं पुव्वाण संजमं काउं । नीसेसकम्ममुक्को भरहरिसी सिवपयं पत्तो ॥ २८० ॥ दाणेण मुणिवराणं धणोवि कल्लाणभायणं होउं । तेलुक्कनमियचलणो जुगाइदेवो जिणो जाओ ॥ २८१ ॥ आह कह जुन्नसेट्ठीदिट्ठंतो अत्थऽदिन्नदाणोवि? । दिन्नं चिय भावेणं सोच्चिय जं उत्तमो एत्थ ॥ २८२ ॥ अविय-तस्सेरिसपरिणामो जेण तया केवलंपि पाविंतो । जिणपारणवुत्तंतं जइ न सुणेंतो खणं एक्कं ॥ २८३ ॥ एत्तोच्चिय नवसेट्ठी जिणस्स वीरस्स लोगनाहस्स । जाइच्छियदाणेणं न भायणं सग्गमोक्खाणं ॥ २८४ ॥ अह पडिया तस्स गिहे वसुहारा तेण भावहीणंपि । दाणं तस्सवि सहलं (आचा०) किं इमिणा एग-

भविएणं ? ॥२८५॥ घलएवमहामुणिणो तवस्सिणो संखधवलदेहस्स। वड्डइणा पाहेयं दिन्नं परमाए भत्तीए॥ २८६ ॥ संवेगपुलइएणं अणमिसबाहुल्ललोयणजुएणं । जाइस्सरहरिणेणऽणुमोइयं तं च भावेणं ॥ २८७ ॥ ते तिन्निवि सुरलोए पवरविमाणे महिड्ढिया देवा । एगावसेसगब्भा उववन्ना दिव्वबोंदिधरा ॥ २८८ ॥ अवरविदेहे गामस्स चिन्तओ रायदारुवणगमणं । साहू भिक्खनिमित्तं सत्था हीणे तहिं पासे ॥ २८९ ॥ दाणन्नपंथनयणं अणुकंप गुरूण कहण सम्मत्तं । सोहम्मे उववन्नो पलिआउसुरो महिड्ढीओ ॥ २९० ॥ लद्धूण य सम्मत्तं अणुकंपाए उ सो सुविहियाणं । भासुरवरबोंदिधरो देवो वेमाणिओ जाओ ॥२९१॥ चइऊण देवलोगा इह चेव य भारहम्मि वासम्मि । इक्खागुकुले जाओ उसुभसुयसुओ मरीइत्ति ॥ २९२ ॥ तत्तो कमेण लद्धुं केसवचक्कित्तणाइं सो जाओ। तिहुयणजाणियाणंदो चरमजिणो वद्धमाणोत्ति ॥ २९३ ॥ कयउन्नसालिभद्दा दरिद्दभावेऽवि पुव्वजम्मेसु । पत्तेसु सुद्धदाणं दाऊणं सुद्धबुद्धीया ॥ २९४ ॥ लोगच्छेरयभूयं रूवं रिद्धिं सुहं च लहिऊण । जाया महातवस्सी उत्तमपयसाहगा खिप्पं ॥ २९५ ॥ पासंगियभोगेणं वेयावच्चमिह मोक्खफलमेव । आणाआराहणओ अणुकंपाइ व्व विसयम्मि ॥ २९६ ॥ सुहतरुछायाइजुओ जह मग्गो होइ कस्सइ पुरस्स । एक्को अन्नो नेवं सिवपुरमग्गोवि इय नेओ ॥ २९७ ॥ अणुकंपं वेयावच्च पाविओ पढमगो जिणाईणं । तयजत्तगो उ इयरो सदेव सामन्नसाहूणं॥२९८॥ ता नत्थि एत्थ दोसो पच्चक्खाएवि निरहिगरणंमि । गुणभावाओ य तहा एवं च इमं हवइ सुद्धं ॥ एत्थात्ति-भक्तादिदानादौ ॥ २९९ ॥ फासियं पालियं चेव, सोहियं तीरियं तहा । किट्टियमाराहियं चेव, जएज्जेयारिसम्मि उ

॥ ३०० ॥ उचिए काले विहिणा पत्तं जं फासियं तयं भणियं । तह पालियं तु असई सम्मं उवओगपडियरियं ॥ ३०१ ॥ गुरुदाणसेसभोयणसेवणयाए उ सोहियं जाण । पुन्नेऽवि थेवकालावत्थाणा तीरियं होइ ॥ ३०२ ॥ भोयणकाले अमुगं पच्चक्खायंति भुंज किट्टिययं । आराहिय पगारेहिं सम्ममेएहिं निट्ठवियं ॥ ३०३ ॥ फासियपमुहपयाणं भणियत्थाणंपि इह पुणो भणणं । मंदमइसुमरणत्थं बहुसत्थपसिद्धिओ चेव ॥ ३०४ ॥ आह किमेयं संते पच्चक्खेयम्मि अह असंतम्मि? । जइ संते तो जुत्तं साहीणे चागजोगाओ ॥३०५॥ आह्ह असंते एवं सयंपि संढस्स बंभयारित्तं । तो विज्जमाणविसयं पच्चक्खाणं हवइ सहलं ॥३०६॥ (आचा०) बज्झाभावेवि इमं पच्चक्खंतस्स गुणकरं चेव । आसवनिरोहभावा आणाआराहणाओ य ॥३०७॥ न य एत्थवि एगंतो सगडाहरणाइ एत्थ दिट्ठंतो । संतंपि नासइ लहुं होइ असंतंपि एमेव ॥३०८॥सगडोया(डस्सा)हरणं पुण किर केणइ माहणेण गीयत्थ । मुणिपुंगवपयमूले नाणाविहगोयरे नियमे ॥ ३०९ ॥ पडिवज्जंते बहुए तहाविहे माणवे निएऊणं । निग्गोयरत्ति अहला नियमा इइ मन्नमाणेणं ॥ ३१० ॥ उवहासबुद्धिण च्चिय निव्विसयंपि हु हवेज्ज जइ सहलं । पच्चक्खाणं मज्झवि सफलं होउत्ति भणिऊणं ॥ ३११ ॥ जावज्जीवंपि इओ सगडं मे सव्वहा न भोत्तव्वं । नियमो एवंरूवो गहिओ साहूण पच्चक्खं ॥ ३१२ ॥ तस्सऽन्नया कयाई कंतारुत्तिन्नछुहाकिलंतस्स । एगा नरवइधूया अववसणकए पयत्तेण ॥ ३१३ ॥ उद्धूलियजंघजुयं अप्पुव्वं माहणं पलोइंती । पक्कन्नमयं सगडं वियरइ पत्तीए काऊण ॥३१४॥ तो सो तं दट्ठूणं चिंतइ साहूहिं सोहणं भणियं । अस्संभाविवत्थूणवि कहिंचि जह संभवो होइ ॥ ३१५ ॥ तो सव्वमेव स-

क्चं पच्चक्खाणं इमं च मे सगडं । भक्खत्ताए पत्तं कहं अहं निययवायाए ॥ ३१६ ॥ चइऊण साहुपुरओ नियवयणं लोविऊण भक्खेमि ? । इय चिंतिय तं सगडं परिहरई सो दिओ सहसा ॥ ३१७ ॥ मुणिवयणजायसद्धो नरवइधूयाए बोहणानिमित्तं । सयलं नियवुत्तंतं कहेइ तीए सवित्थारं ॥ ३१८ ॥ सयपालणत्तिदारं सपसंगं वन्नियं अओ वोच्छं । पच्चक्खाणस्स फलं समासओ सुत्तनिद्दिट्ठं ॥ ३१९ ॥ एयं पच्चक्खाणं विसुद्धभावस्स होइ जीवस्स । चरणाराहणजोगा निव्वाणफलं जिणा विंति ॥ ३२० ॥ पच्चक्खाणेण जिया थेवेणवि भावणाए चिन्नेणं । पावेंति सुहसामिद्धिं दामन्नगसत्तवइणोव्व ॥ ३२१ ॥ दामन्नग कुलपुत्तो वहविरइं पालिऊण दृढचित्तो । तरिऊण आवयाओ जाओ भोगाण आभागी ॥ ३२२ ॥ अमुणियफल सत्तपए निवइकलत्तं च कायमंसं च । चइऊणं सुरलोए उववन्नो सत्तवइओऽवि ॥ ३२३ ॥ पच्चक्खाणेण मुणी तवोविसेसेहिं चित्तरूवेहिं । नाणाविहरिद्धीए सणंकुमारोव्व पावेंति ॥ ३२४ ॥ पच्चक्खाणेण जिओ आसवदारस्स निग्गहं कुणई । संवरियासवदारो कम्मेहिं न बज्झए कहवि ॥ ३२५ ॥ पच्चक्खाणेण तवो तवेण कम्माण निज्जरा होइ । निज्जरितकम्मकवओ जीवो पावेइ परमपयं ॥ ३२६ ॥ पच्चक्खाणमिणं सेविऊण भावेण जिणवरुद्दिट्ठं । पत्ता अणंतजिवा सासयसोक्खं लहुं मोक्खं ॥ ३२७ ॥ आवस्सयपंचासयपणवत्थुयाविवरणाणुसारेणं । पच्चक्खाणसरूवं भणियं जसएवसूरीहिं ॥ ३२८ ॥ पच्चक्खरगणणाए गंथपमाणं सयाणि चत्तारि । नयणवसुरुद्दमाणो ( ११८२ ) विक्कमनिववच्छरो एत्थ ॥ ३२९ ॥

॥ इइ सिरिजसोएवसूरिसुत्तियं पच्चक्खाणसरूवं सम्मत्तं ॥ ग्रन्थाग्रम् ४०० ॥

शकटोदाहरणं प्रत्याख्यानफले दामन्नकाद्याः

नमः सरस्वत्यै ।

# श्रीकातन्त्र (सारस्वत) विभ्रमसूत्रं सवृत्तिकं लिख्यते.

नत्वा जिनेन्द्रं स्वगुरुं च भक्त्या, तत्सत्प्रसादाप्तसुसिद्धिशक्त्या ।
सत्सम्प्रदायादवचूर्णिमेतां, लिखामि सारस्वतसूत्रयुक्त्या ॥ १ ॥
प्रायः प्रयोगा दुर्ज्ञेयाः, किल कातन्त्रविभ्रमे ।
येषु मोमुह्यते श्रेष्ठः, शाब्दिकोऽपि यथा जडः ॥ २ ॥
कातन्त्रसूत्रविसरः खलु साम्प्रतं यत्, नातिप्रसिद्ध इह चातिखरो गरीयान् ।
स्वस्येतरस्य च सुबोधविवर्द्धनार्थोस्त्वितथं ममात्र सफलो लिखनप्रयासः ॥ ३ ॥

कस्य धातोस्तिबादीनामेकस्मिन् प्रत्यये स्फुटम् । परस्परविरुद्धानि, रूपाणि स्युस्त्रयोदश ? ॥ १ ॥

'कस्ये' त्यादि प्रश्नोऽत्र उत्तरं, गिरतेरवपूर्वस्यानद्यतन्यामात्मने पदे मध्यमध्वमि सम्प्राप्ते रूपाणि स्युस्त्रयोदश, 'गॄ निगरणे' गॄ अष्टसु स्थानेषु स्थाप्यः अवपूर्वः, अग्रे अनद्यतनध्वंप्रत्ययः, 'भूते सि' (७-२-७) रिति सिः, इकारस्योच्चारणार्थत्वात् स,

'दिवादावडि' त्यडागमः, 'सिसतासीस्यपा' मिति (७-४-१०४) इट्, 'ध्वे च सेर्लोपो' गुणः, गर्, 'इटो ग्रहा' (७-४-१२०)-मिति बहुवचनेन वृङ् सं० वृञ् वरणे दीर्घऋवर्णान्तानां इटो वा दीर्घत्वमिति क्षेमेन्द्रकृतव्याख्यातः वेट ईट्, स्वरहीनं, अवागरिध्वं अवागरीध्वं, वा लत्वं र् ल्, अवागलिध्वं अवागलीध्वं, तथा 'नामिनोऽचतुर्णां धो ढ' (७-४-१२१) इत्यनेन सेटो हसाद्वेति वक्तव्यम्, ध्वमित्यस्य ढ्वं, अवागरीढ्वं अवागलीढ्वं अवागरिध्वं अवागलिध्वं, गॄ निगरणे ४ अवपूर्वः तनादिगणस्थः ध्वं प्र०, पूर्वमडागमः, भूते स्प्रत्ययः, 'स्वरान्तानां हन्ग्रहदृशां भावकर्म्मणोः सिसतासीस्यपा मिति इट्, णित्वाद् वृद्धौ गार् ४ स्वरहीनं प० नाम्यन्ताद्धातोः ध्वं ढ्वं वा, वा लत्वं, अवागारिध्वं अवागालिध्वं अवागारिढ्वं अवागालिढ्वं ४, इडभावे गॄ ध्वं दिवादावद् भूतस् प्र० अवपूर्वः 'ध्वे च सेर्लोप' इति स् लोपः 'ॠत इर्' (७-४-१०२) इति इर् अवागिर् ध्वं इति स्थिते य्वोर्विहस इति दीर्घः गीर्, स्वरहीनं, नाम्यन्तात् ध्वमित्यस्य ढ्वं, अवागीर्ढ्वं इति सिद्धं, एवंविधानि त्रयोदश रूपाणि ॥ १ ॥

अग्निभ्यः पार्थिवेभ्यश्च, प्रथमान्तं पदद्वयम्। एवेति नैतदाबन्तं, श्वानस्येति च साधुता ॥ २ ॥

'अग्निभ्य' इति चतुर्थीपञ्चम्योर्बहुवचनान्तमसंदिग्धं, प्रथमान्तं च सन्दिग्धमिति साध्यते, 'भ्यासि भ्यये' भ्यस् भ्यसतीति क्विप् क्विप् सर्वापहारी लोपः, अग्निपूर्वः, अग्नेर्भ्यः आग्निभ्य इति पञ्चमी तत्पुरुषे प्रथमैकवचनं सिः 'हसेपस्सेर्लोप'(३-२-३) 'स्रोर्विसर्गः' (४-४-९) अग्निभ्यः, यद्वा 'भये तु भी' रित्येकाक्षरनिघण्टौ, भीर्भयम् अग्नेर्भ्यः १-३ । इभ्यः पार्थिवपूर्वः पार्थिव-

---

१ यद्वा 'ञिभी भये' अग्नेर्बिभेतीति क्विप् १-३ अग्निभ्यः

स्य-राज्ञः इभ्यः-ईश्वरः पार्थिवेभ्यः, अथवा इभी-हस्तिनी, पार्थिवस्य इभ्यो-हस्तिन्य इति प्रथमाबहुवचनं पार्थिवेभ्यः, एष् गतौ, एषतीति एष् क्विप् लोपः, तृतीयैकवचने एषा अथवा नसे-नासिकायै हितं नस्यं, हितार्थे यप्रत्ययः, नञ्पूर्वः, न विद्यते नस्यं अस्येत्यनस्यं, श्वेवानस्यं श्वानस्यं तस्य सम्बोधनं हे-श्वानस्य![1], यद्वा 'अण् प्राणने' अन् अननं आनः, 'भावे घञि' (घञ् भावे८-३-४)इ. तिघञ् प्रत्ययः ञित्त्वाद् वृद्धौ आन इति सिद्धं, शुनः आनः-प्राणः श्वानः तस्य श्वानस्य, षष्ठीतत्पुरुषः, यद्वा 'षोऽन्तकर्म्मणि' षो 'आदेः ष्णः स्नः' (७-४-७७) अग्रे हि, 'दिवादेर्य' (७-१-१५) इति यप्रत्ययः 'स्वो' रिति (७-४-७२) ओकारलोपः, 'अत' (७-३-१३) इति हेर्लुक् स्य, श्वान आमन्त्रणे, सिलोपः, हे श्वान स्य, श्वानशब्दस्याभिधानकोशोक्तस्य विषयतैव नास्ति, 'शुनः श्वानो गृहमृग' इति हैमः ॥२॥

भवेतामिति शब्दोऽयं, बहुत्वे वर्त्तते कथम्? । यागः षष्ठीसमासः स्यात्, पञ्चमी पर्वतात् न तु ॥३॥

'भवेता' मिति, प्रश्नार्थस्य सुगमत्वान्निर्वचनमेव निर्वच्मः, 'इण् गतौ' इ भवः पूर्वः, भवं-संसारं यान्ति-गच्छन्ति इति क्विप 'ह्रस्वस्य पिति कृति तुगि' (८-४-२२) ति तुक्, क्वित्त्वादन्ते क्विप् लोपः, भवेत्, षष्ठीबहुवचने आमि भवेतामिति सिद्धं । इः-कामस्तस्य आगः, यद्वा ईः-लक्ष्मीस्तस्या आगः-अपराधः यद्वा या-लक्ष्मीस्तस्या अगः-पर्वतः पादपो वा, यागः, त्रिष्वप्यर्थेषु षष्ठी-तत्पुरुषः, यद्वा 'यस्तु वाते यमेऽपि चे'त्येकाक्षरनिघण्टुवचनात् यः-यमस्तस्यागः-अपराधः-यद्वा 'यमो यः कथितः शिष्टैर्यो दातरि च

॥ २९ ॥

१ वा एषणं एष्. २ विनाशे.

शब्दित' इत्युक्तत्वाद्यः-दाता तस्यागः-पर्वतो द्रुमश्च, इत्थमपि समाससम्भवः,'पूर्व पर्व सर्व पूरणे'पर्व अग्रे हि, अप् कर्त्तरी (७-१-१२)-त्यप् प्रत्ययः स्वरहीनं, तुह्योस्तातङ्ङाशिषि वे( )ति हेः स्थाने तात् पर्वतात्, यद्वा 'अद भक्षणे' अद् तिप् प्रत्ययः 'अप् कर्त्तरी'त्यप् 'अदादेर्लुगि'(७-१-१३) त्यपो लुक्, अत्ति, पर्वतम् अत्तीति क्विप् क्विपो लोपः प्रथमैकवचनं सिः 'हसेपः सेर्लोपः'(३-२-३)'वावसाने' (४-२-२७) पर्वतात्, यद्वा पर्वतमततीति, 'अत सातत्यगमने' इत्यस्मात् क्विप्, एवं वृक्षात्, घटादित्यादयो ज्ञेयाः ॥३॥

**पंचङ्कलानि साधुत्वं, कथं याति च लक्षणात्। मुनीनामिति नो षष्ठी, त्याद्यन्तं चाश्व इत्यपि ॥४॥**

' पंचङ्कलानी 'ति, अत्रापि प्रश्नार्थस्य सुगमत्वान्निर्वचनं ब्रूमः, एवमुत्तरश्लोकेऽप्यूह्यं, पंचन् १-३ अग्रे पप् १-३ पंच पट् च पंचपाः, पंच वा पट् वा परिमाणमेषां 'टाडका' इति(६-३-१५) डप्रत्यये पंचपाः, पंचपानाचक्षते'जिडिंत्करणे'(७-४-६) इति जिप्रत्ययः, डित्त्वाट्टिलोपः, पंचपि अप् कर्त्तरि गुणायादेशौ पंचपयन्तीति क्विप् प्रत्ययः, क्विप् लोपे 'ञे' रिति ( ७-४-७१ ) जिलोपे पञ्चप्, स्थित एव पञ्चप् १-३, अग्रे हलानि, पंचपां हलानि पञ्चङ्कलानि, मध्ये 'पो डः' (४-४-५) ड्, अन्तवर्त्तिनीं विभक्तिमाश्रित्य पदान्तत्वं, तस्माद् 'वाऽवसाने' (४-२-२७) अत्र हि वाशब्दस्य व्यवस्थितविकल्पार्थत्वाच्च पः ड्, ' हो झभाः ' इति ( २-३-४ ) हस्य ढः पञ्चङ्कलानि सिद्धं। मुनिः इनो यस्याः सा मुनीना तां मुनीनां, यद्वा मुनीनां इना-स्वामिनी तां २-१, अश्व इत्यस्य स्याद्यन्तत्त्वं प्रसिद्धं, त्याद्यन्तत्वं कथमिति प्रश्नः, 'ओ श्वि गतिवृद्ध्योः' श्वि दिवादिगणस्थः, सिपि प्र०स दिवादावडि(७-२-४) त्यट् 'लित्पुपादे'-(७-२-१५) रित्यादिशब्दाद् ङः प्र०, श्वयतेः श्वादेशः प्रयोगवशात् स्वरहीनं 'स्रोर्विसर्गः' (४-४-९) अश्वः ॥४॥

१ भौवादिकः

**अष्टाविति कथं द्वित्वं, राजेभ्य इति साधुता । तेनेत्येतत्त्याद्यन्तं स्यादत्याद्यन्तं भवेदिति ॥५॥**

'अष्टाविति' 'अशूङ् व्याप्तौ' अशूङ् अश्यतेऽस्म 'क्तक्तवतू' इति (८-२-१३) क्तप्रत्ययः, 'छशषराजादेः षः' इति (४-४-१८) षः,'ष्टुभिःष्टु'रिति(२-३-७)टः, प्रथमाद्विवचनं औ, अष्टौ। राज्ञामिभ्यो राजेभ्यः षष्ठीतत्पुरुषः१-१। 'तनू विस्तारे' णवादिस्थोऽप्रत्ययः 'द्विश्च' (७-४-४३) 'लोपः पचां कित्ये चास्ये'ति(७-४-४५) पूर्वद्विवचनलोपः अकारस्यैकारः, स्वरहीनं० तेन। 'इण् गतौ' भवपूर्वः भवं संसारं शङ्करं वा एतीति क्विप् तुक्, क्विब्लोपे भवेत् १-१, 'हसेपः सेर्लोपः' (३-२-३) ॥ ५ ॥

**हस्तौ द्विवचनं नेदं, शोभनेष्वित्यसप्तमी । क्षीरस्येति न षष्ठीयं, त्याद्यन्तं वायुरित्यपि ॥ ६ ॥**

'हस्ता' विति हस्ताविति द्विवचनान्तं प्रसिद्धं, द्विवचनान्तं नेदं कथमिति प्रश्नः, तत्र 'हस हसने' हस् 'स्त्रियां क्ति' रिति (८ ४-१६) क्तिः स्वरहीनं हस्तिः, ७-१ 'ङेरौ ङित्' (३-२-२१)।शोभना इषवो—बाणा यत्र कुले तत् शोभनेषु, 'नपुंसकात् स्यमोर्लुक्'(३-३-११)। हे क्षीर स्येति, 'षोऽन्तकर्म्मणि' धातुः, साधना प्राग्वत्, अथवा क्षीरमिच्छतीति 'करणे च यः' ( ञिडित्करणे ७-४-६ ) इति सूत्रस्थचकारात् क्वचिदितीच्छायामपि यः प्रत्ययः, सुगागमोऽसुगागमश्चेति ज्ञातव्यमिति पुंजराजव्याख्यानात्, अनेन यः प्रत्ययः सुकागमः 'स धातु' रिति (७-४-१०) धातुत्वात् अग्रे हि 'अतः' (७-३-१३) इति हेर्लुकि क्षीर स्येत्यषष्ठ्यन्तं। 'वा गति गन्धनयोः' वा विधिसम्भावनयोः यादादिस्थो युस् प्रत्ययः, अप्प्रत्ययः अदादेर्लुक्, वायुः ॥ ६ ॥

**दधिस्येति कथं साधु, मधुस्येति तथा परम् । केनेत्येतददान्तं स्यादपापा इत्यसुप्तता ॥ ७ ॥**

कातन्त्र (सारस्वत) विभ्रमे ॥ ३२ ॥

'दधिस्येति' दधि मधु, दध्ना भोजनमिच्छति मध्विच्छति, 'करणे च य' इति यप्रत्ययः,सुगागमः हि अप् प्रत्ययः, अदेऽलोपः, 'अत' (७-३-१३)इति हेर्लुक्, दधिस्य मधुस्य,असुगागमे दध्यस्य मध्वस्येति सिद्धं। कं-वारि तस्य इनः-स्वामी केनस्तस्य सम्बोधनं केन!, अपापा इत्यसुप्तता-अस्याद्यन्तता त्याद्यन्तता साध्यते 'पर्द कुत्सिते शब्दे' पर्द् अत्यर्थं पर्दते 'अतिशये हसादेर्य'ङिति(७-३-५७) यङ् प्रत्ययः, 'वा अन्यत्रे'ति ( ८-२-२७ ) यङ्लुक्, 'द्विश्च' पपर्द् 'आत' इति ( ७-४-३५ ) पूर्वस्य दीर्घः, अनद्यतनस्प्रत्ययः, 'दिवादावट्' (७-२-४) 'सोऽपदान्ते रेफप्रकृत्त्योरपि दधो रत्त्वं इति व्याकरणान्तरसूत्रेण दस्य रः दुर्, 'दिस्योर्हसा'दिति ( ७-३-३ ) सुलोपः, 'रिलोपो दीर्घश्चे'ति ( २-४-१२ ) रलोपः पूर्वस्य च दीर्घः 'स्रोर्विसर्गः' ( ४-४-९ ) अपापा इति सिद्धं, एवं स्पर्द्धनेद्धेश्च अपास्पाः अनाना इति भवति, एवमन्येषामप्येवंजातीयानां यङ्लुगन्तानामूह्यानि रूपाणि ॥ ७ ॥

बहुवचन-प्रतिरूप-काणामेक-वचनता

**एतेषां कथमेकत्त्वं, वनानि ब्राह्मणैरमी। वृक्षाः पचन्ति येषां यान्, वायुभ्यः पार्थिवाः सुराः॥ ८ ॥**

'एतेषा' मिति वैषम्यमेव लिखामः, 'वन षण संभक्तौ' वन्, तुवादिस्थ आनिप्प्रत्ययः, 'अप् कर्त्तरि' 'सवर्णे दीर्घः' ( २-१-१४ ) सह, वनानि। ब्राह्मण सम्बोधनं अग्रे 'इण् गतौ' इ, दिवादिस्प्रत्ययः 'अप् कर्त्तरि' 'अदादेर्लुक्' 'दिवादावट्' 'अइए' ( २-१-१५ ) स्वरादेः 'ए ऐ ऐ' ( २-१-१९ ) ऐः ब्राह्मणैः, हे ब्राह्मण ! त्वं ऐः-गच्छ इत्यर्थः। अमोऽस्यास्तीत्यमि 'मान्तोपधाद्वत्विना' विति ( ६-१-३६ ) इन्प्रत्यये अमी। 'अस क्षेपणे' अस् वृक्षपूर्वः, वृक्षान् अस्यतीति क्विप् लोपः, प्रथमैकवचनं सिः १-१ 'हसेपः से०' वृक्षा। 'डु पचञ् पाके' पच्, पचतीति 'शतृशानौ तिप्तेवत्क्रियाया' मिति ( ८-२-१७ ) शतृ ॥ ३२ ॥

प्रत्ययः, शकारश्चतुर्वत्कार्यार्थः, ऋकारोऽनुबन्धो नुमागमार्थः, 'अप्ययोरा' दिति ( ३-२-३२ ) नुमागमः 'ञ्व्रित' (६-२-४) अप्रत्ययः, स्त्रीत्वादाप् इतीप्, पचन्ती, धौ ह्रस्वः, हे पचन्ति ! । 'येषृ प्रयत्ने' येष्, येषणं येषा 'गुरोर्हसा' दिति ( ८-४-२० ) अप्रत्ययः, स्त्रीत्वादाप् इतीप्, पचन्ती, धौ ह्रस्वः, हे पचन्ति ! । 'येषृ प्रयत्ने' येष्, येषणं येषा 'गुरोर्हसा' दिति ( ८-४-२० ) अप्रत्ययः, 'व्रितो नु' मिति १-१ तां । 'या प्रापणे', यां यातीति यान्, 'शतृशाना' विति शतृ, 'सवर्णे दीर्घः सहे' ति ( २-१-१४ ) दीर्घः, 'व्रितो नु' मिति १-१ तां । 'भ्यसि भये' भ्वादिः वायुपूर्वः, वायोर्भ्यसतीति वायुभ्यः, क्विप्प्रत्ययः लोपः, 'हसेपः सेर्लोपः' ( ३-२-३० ) नुम् १-१ । 'भ्यसि भये' भ्वादिः वायुपूर्वः, वायोर्भ्यसतीति वायुभ्यः, क्विप्प्रत्ययः लोपः, 'हसेपः सेर्लोपः' ( ३-२-३० ) नुम् १-१ । 'असु क्षेपणे' अस् पार्थिवपूर्वः, पार्थिवं अस्यतीति क्विप् लोपः १-१ हसेपः 'स्रोर्विसर्गः' पार्थिवाः । 'षुञ् ( ३-२-३ ) स्त्रो० । 'असु क्षेपणे' अस् पार्थिवपूर्वः, पार्थिवं अस्यतीति क्विप् लोपः १-१ हसेपः 'स्रोर्विसर्गः' पार्थिवाः । 'षुञ् अभिषवे' षु, 'आदेः ष्णः स्नः' ( ७-४-७७ ) सु सु रापूर्वः, सुरां सुनोतीति क्विप् 'ह्रस्वस्य पिति कृति तुगि' ति ( ८-४-२२ ) तुक्, सुरासुत् तमाचष्टे 'ञिर्डित्करणे' इति ( ७-४-६ ) ञिः, स च डित्, टिलोपे सुरासि, सुरासयतीति क्विप्, लोपः 'ञे'-रिति ( ७-४-७१ ) ञिलोपः सुरास् प्रथमैकवचनं सिः सुराः । यद्वा सुरानस्यतीति सुराः साधना प्राग्वत् । यद्वा रैशब्दः सुपूर्वः शोभना राः सुराः १-१ 'रैस्भी' त्याकारः 'स्रोर्विसर्गः' सुराः ॥ ८ ॥

शेषाणि पूर्वाणि समान्यजानां, फलानि मूलानि हलान्यगूनाम् ।
अभ्राणि नीलानि दलान्यतस्यः, शूलानि कूलानि तदान्यपापाः ॥ ९ ॥

'शेषाणी'ति, इह वक्ष्यमाणे च वृत्ते प्रथमादिबहुवचनान्तप्रतिरूपकाण्येकवचनान्तानि कथं स्युरिति प्रश्नार्थे वयं वच्मः, 'कष शष जष झष वष मष मुष रुष यूष जूष शिष हिंसायां' शिष्पूर्वः 'पर्व(पूर्व)सर्व पूरणे' पूर्व्, 'षम ष्टम वैक्लव्ये' षम्, 'आदेः ष्णः स्नः' (७-४-७७) सम्

तुवाद्युत्तमपुरुषे आनिप्, अप् कर्त्तरी' (७-१-१२) त्यप् शिपधातोरुपधागुणः, स्वरहीनं, सवर्णे दीर्घः सह, शेषाणि पूर्वाणि समानि। 'ज्ञा अवबोधने' ज्ञा, दिवा० अम्, अङ् 'ना त्र्यादे' रिति (७-१-२०) ना प्र०,'ज्ञाजनोर्जा' इति (७-४-८५) जा आदेशः, सवर्ण०, मोऽनुस्वारः, अजानां। 'फल निष्पत्तौ' फल्, 'मूल प्रतिष्ठायां' मूल 'हल विलेखने' हल्, तुवाद्युत्तमपुरुषैकवचने आनिप्, 'अप् कर्त्तरी' त्यप् , सवर्णे दीर्घः सहेति दीर्घत्वे फलानि मूलानि हलानि सिद्ध्यन्ति, यद्वा फलपूर्वः 'णीञ् प्रापणे' णी, 'आदेष्णः स्नः' नी, फलमानयति यत् कुलं क्विप् प्रत्ययः, लोपः, नामसंज्ञायां स्यादिः, प्रथमैकवचने १-१ 'नपुंसकस्ये'ति (४-२-७) ह्रस्वत्त्वे 'नपुंसकात् स्यमोर्लुगिति (३-३-११) सिलोपे फलानि इति सिद्धः, एवमन्यावापि प्रयोगौ। न विद्यते गौर्येषां ते अगवः 'ना'(६-४-५)इति नञोऽकारः, 'गो' (४-२-६) रिति ह्रस्वः, तेषां अगूनामिति बहुवचनान्तं स्यात्, एकवचनान्तं तु 'गु पुरीषोत्सर्गे' गुवति स्म 'गत्यर्थाद-कर्म्मका'दिति क्तप्रत्ययः, 'ल्वाद्योदितश्चे'ति (८-४-३७) तस्य नत्वं, 'दुग्वोर्दीर्घश्चे'ति ज्ञापकादीर्घत्वे गूना, स्त्रीत्त्वादाप् , न गूना अगूना तां २-१ सिद्धम् । 'अभ्र वभ्र मभ्र गतौ' अभ्र चेरेति गत्यर्थाः, 'नील वर्णे,' नील् , 'दल त्रिफला विशरणे' दल्, आनिप् प्रत्ययः, अपि प्रत्यये इष्टरूपसिद्धिः। अतसीशब्दाज्जसि बहुत्त्वं, एकत्त्वं पुनरित्थं-'तस क्षये' तस्, दिवादि स्प्र०,दिवादावद्,'दिवादेर्यः' (७-१-१५) स्वरहीनं, स्रो०, अतस्य इति सिद्धम् । 'शूल रुजायां' 'कूज आवरणे' 'तट समुच्छ्राये' सर्वत्राकारोऽनुबन्धः, साधना सुगमाऽप्राणि-वत्। 'पा पाने' 'पा रक्षणे' वा, अपपूर्वः, दिवादिः स, 'दिवादावद्' (७-२-४)'भूते सि'रिति(७-२-७) स् प्रत्ययः,'दादेः प'(७-३-१०) इति सिप्रत्ययलोपः, स्रोर्विसर्गः, अपापाः, पदधातुना निष्पादितेन पूर्वश्लोकोक्तेन अनेन प्रयोगेण न पौनरुक्त्यं, धात्वन्तरत्वाद-र्थान्तरत्वाच्च ॥ ९ ॥

सुखानि शीलानि नखान्यसास्नाः, खलानि पापानि बलान्यचर्चाः ।
पुराणि वर्षाणि मठान्यमीनाः, घनानि सर्वाणि बिलान्यपां च ॥ १० ॥

सुखानि १-१, यथा खनिशब्दस्तथा खानि-
'सुखानी'ति, कथमेकत्त्वमित्यनुवर्त्तते, सुष्ठु--शोभनाः खानयो यत्र कुले तत् 'कर्त्तुर्यङ्'(७-४-५) अत्रार्थे क्किरपि वाच्य इति क्किप् प्रत्ययः,
शब्दोऽपि 'खनिः खानी'ति हैमलिंगानुशासनोक्तः, यद्वा सुखमिवाचरति अथवा 'अन प्राणने' अन् सुख-
'वे'रिति(८-४-२७) विलोपे आनिपप्रत्यये सुखानि, अथवा सु-शोभनं खं-छिद्रादि तदिवाचरतीति, 'नपुंसकात् स्यमोर्लुगि'ति(३-३-११)सेर्लुकि
पूर्वः, सुखेन अनितीत्येवंशीलं 'णिनिरर्तीते' इति णिन्प्रत्ययः, णित्त्वाद् वृद्धौ प्रथमैकवचने 'उख नख णख वखे'ति दण्डकधातुः,
सुखानि, यद्वा सुखमानयति यत्कुलं तत् सुखानि, फलानीतिवत्साध्यं,पंचार्थाः।'शील समाधौ' इत्यमरः इति भूम्नि
प्राग्वत्साध्यानि शीलानि नखानि। असास्ना इति न विद्यते सास्ना येषां तेऽसास्नाः 'सास्ना तु गलकम्बल' 'अतिशये
प्रसिद्धं, एकत्वं तु 'ष्णा शौचे' ष्णा, 'आदेः ष्णः स्नः' 'निमित्ताभावे नैमित्तिकस्याभावः' इति स्ना, अत्यर्थं स्नाति 'पूर्वस्य हसादिःशेष'इति(७-४-२४)
हसादेर्यङ् 'द्विश्चे'ति (७-३-५७) यङ्प्रत्ययः, 'वाऽन्यत्रे'ति(८-२-२७) यङ्लुक्, द्वित्वं स्ना स्ना, 'खल संचये'खल्, आनिपप्रत्यये अपि
नकार लोपः, 'सधातु' (७-४-१०) रिति दिवादिगणगतसिप्प्रत्ययः स्, 'स्रोर्विसर्गः' असास्नाः। 'ह्वादिवच्च द्रष्टव्य'मिति वचनादपप्रत्ययः,
खलानि सिद्धं। 'पा पाने' पा, अत्यर्थं पिबति, अतिशये यङ्, 'वाऽन्यत्रे'ति(८-२-२७)यङ् लुक् 'बल प्राणधारणे' बल्. आनिपि
'ह्वादेर्द्विश्चे' (७-१-१४) त्यपो लुक् द्विश्च, तुवादिपरस्मैपदोत्तमपुरुषैकवचने आनिपि सिद्धं पापानि।

बलानि। न विद्यते चर्चा येषां ते अचर्चाः इति बहुत्वं, एकत्वे प्रश्नः, 'चृती ग्रन्थे हिंसायां च' चृत्, 'अतिशये हसादेर्यङि'ति (७-३-५७) यङ्, यङ्लुकि च ह्रादित्वादप् लुक् द्विश्च, 'र' इति(७-४-२८)रत्वे 'ऋदन्तानामृदुपधानां चे'ति(८-२-३०)पूर्वस्य रुक्, दिवादिस् प्र०,गुणः, तस्य रत्वे 'रिलोपो दीर्घश्चे'(२-४१२) ति रस्य लुकि पूर्वस्य दीर्घे अचर्चाः, यद्वा चर्चा इवाचरति 'कर्त्तुर्यङि'ति (७-४-५) 'अत्रार्थे क्विरपि वाच्य' इति क्षेमेन्द्रोक्तेः,'वे'रिति(८-४-२७) विलोप, अनद्यतने स् प्रत्ययः, दिवादावट्,स्रोर्वि०,अचर्चाः। 'पुर अग्रगमने' पुर्, तुदादि-तुवादिस्थ आनिप्, तुदादेरप्रत्ययस्यापित्त्वान्नोपधागुणः, णत्वं, पुराणि। 'वृष सेचने' वृष् आनिप्, अप्प्रत्ययः, अपः पित्त्वाद् 'उपधाया लघो' रिति(७-४-६०)गुणः, ऋकारस्य अर्, णत्वं, वर्षाणि। 'मठ मदनिवासयोः' मठ्, आनिपि अपि मठानि। न विद्यन्ते मीना-मत्स्या येषु ते अमीनाः, मीनशब्दे सत्ययं समासः, एकत्त्वं तु 'मीञ् हिंसायां' दिवादिसिः, दिवादावट्, 'नाक्र्यादे' रिति (७-१-२०) ना प्र०, स्रोर्वि० अमीना इति सिद्धं। घन इवाचरति 'कर्त्तुर्यङि' ति यङ्, यङ् लोपः आनिपि घनानि रूपं सिद्ध्यति। 'अन प्राणने' अन् सर्वपूर्वः सर्वमनितीत्येवंशीलं 'णिनिरतीते' (८-२-११) णिन् प्रत्ययः, णत्वं १-१ 'नपुंसकात् स्यमोर्लुक्' 'सवर्णे दीर्घः सर्वाणि। 'विल भेदने' विल्, आनिप् प्र० 'तुदादेः' (७-१-१९) गुणनिषेधः विलानि। 'पा पाने' अनद्यतने अम् दिवादावट् भूते सिः 'दादेः प' इति (७-३-१०) सेर्लोपः 'सवर्णे दीर्घः सह' 'मोऽनुस्वारः' (२-३-१८) अपां,यद्वा 'पा रक्षणे' पा, अनद्यतने अम्, अप्कर्त्तरीत्यप्, अदादेर्लुक् (७-१-१३) सवर्णे दीर्घः सहापामिति सिद्ध्यति ॥१०॥ **समुच्चयाच्चकारस्य, स्याद्यन्तं भवतीत्यपि। तथा जग्लौ दधौ मम्लौ, ददावित्यादयोऽपरे ॥१॥ जग्ले पपे ददे मम्ले, जज्ञे सस्ने मुखास्तथा। विना परोक्षमभ्यूह्याः, स्याद्यन्ता बहवो बुधैः ॥ २ ॥** अनयोः सोपयोगित्वात् किंचिल्लिख्यते-'भू सत्तायां' भू, भवतीति 'शतृशाना'

विति अतप्रत्ययः, अप् कर्त्तरीत्यप् (७-१-१२) गुणः, ओ अव् , 'ष्ट्रित' (६-२-४) इतीप् भवति, सम्बोधने हे भवति!, 'ध्यौ ह्रस्व' इति (३-२-११) ह्रस्वः। 'ग्लै हर्षक्षये' 'म्लै गात्रविनामे' 'डुधां धारणपोपणयोः' 'डुदां दाने' 'पा रक्षणे' 'ला आदाने' 'कै गै रै शब्दे' सन्ध्यक्षराणामा' (७-४-७३) इत्याकारः, ग्लायति स्म म्लायति स्म दधाति स्म ददाति स्म पाति स्म लाति स्म रायति स्म एभ्यो धातुभ्य आद्दितः किर्द्विश्चे' ति (८-२-३१) सूत्रेण कि प्रत्ययः, पश्चाद् द्विर्वचनं ह्रस्वः 'आतोऽनपी (७-४-६९) त्याकारलोपः, स्वरहीनं, जग्लिः मम्लिः दधिः ददिः पोपः ललिः ररिः जगिः इति जातं इकारान्तं, ७-१ ङेरौर्डित्' (३-२-२१) जग्लौ मम्लौ दधौ ददौ पपौ ललौ ररौ जगौ, एवं जग्लिमम्लिपपिदधिददिशब्देषु सम्बोधने 'धा' विति (३-२-१८) सूत्रेण एकारे कृते जग्ले मम्ले पपे इत्यादयः प्रयोगाः स्युः । 'सृ गतौ' सृ, सरति स्म'आद्दतः किर्द्विश्चे ति (८ २-३१) किः, ककारः कित्कार्यार्थः, इप्रत्ययः, द्वित्वं, सृ सृ इति स्थिते 'र' (७-४-२८) इति पूर्व ऋकारस्य अत्वं, 'ऋ र' मिति (२-१-३) रत्वं सस्रिः, इकारान्तत्वे 'समानाद्धेर्लोपोऽधातो' रिति (३-१-६) धेर्लोपे 'धा' विति (३-२-१८) एत्वे सस्रे इति सिद्धं । 'जनी प्रादुर्भावे' ईकार 'आदीदित' इति सूत्रविशेषणार्थः, जन्, 'आद्दतः किर्द्विश्चे' ति चकारादुपधालोपिन इति क्षेमेन्द्रोक्तेः चकाराद्गमिजनिहनिभ्यः किरिति मण्डनव्याख्यातश्च किप्रत्ययः, द्वित्वं, ज जन् इ इति स्थिते 'गमां स्वर' (७-४-६८) इत्युपधोलापे, स्वरहीनं, जज्ञि, पश्चादिकारान्तत्वेन हरिशब्दवत् सम्बोधने जज्ञे इति सिद्धं, एवं जग्मे जघ्ने इत्यादयोऽपि साध्याः । ( जगाम न गमे रूपं ) 'कै गै रै शब्दे' सन्ध्यक्षराणामाः, गा, गायतीत्येवंशीलः 'आद्दतः कि' रिति किप्रत्ययः, द्विश्च, 'कुहोश्चु' रिति (७-४-२६) गस्य कः,

'आतोऽनपी' (७-४-६१) त्याकारलोपे जागिः, जंगिमाचष्टे 'णिर्डितकरणे' इति (७-४-६) णिप्रत्यये जगयति, जगयतीति क्विप् लोपः जग्, जग् इवाचरति 'कर्त्तुर्यङिङ' ति (७-४-५) यङ्, यङ् लोपः, तुवादिः आम जगाम इति रूपमनुक्तमपि प्रसङ्गादिह लिखितम् ॥

**अधीये नोपसृष्टस्य, शक्यतीत्यस्य साधुता । जागर्त्तीति न जागर्त्तेरुच्यतीति च साधुता ॥ ११ ॥**

'अधीये' इत्यादि, अधीये इति रूपं उपसृष्टस्य-उपसर्गसहितस्य 'इङ् अध्ययने' इ इङिकावध्युपसर्गतो न व्यभिचरतः इति सदा अधिपूर्वः, वर्त्तमाने ए, 'नुधातो' रिति ( ३-४-२१ ) इय् स्वर० अधीये, किन्त्वन्यथा साध्यते, 'धीङ् अनादरे' धी, अनद्यतने इ, दिवादावद्, 'दिवादेर्यः' ( ७-१-१५ ) 'अइ ए' ( २-१-१५ ) अधीये, यद्वा 'डुधाञ् धारणपोषणयो' रित्यस्य धातोर्यकि प्रत्यये इ परे रूपं सिद्धम्। 'शक्लृ शक्तौ' इति धातोर्यकि प्रत्यये कृते शक्यते इति भाव्यम्, 'शक मर्षणे' शक्, वर्त्तमाने तिप्प्रत्ययः दिवादेर्य इति यः, शक्यति, यद्वा शक्य इवाचरति कर्त्तुर्यङिति यङ्, लोपः, वर्त्तमाने तिप्, अप् कर्त्तरि इत्यप्, अदादेर्लुक्, शक्यति रूपं सिद्धं। जागर्तीति 'जागृ निद्राक्षये' इत्यस्य प्रसिद्धं, तत्र नेदमस्येति पृच्छ्यते, 'गॄ निगरणे' गर्हितं गिरति 'अतिशये हसादे' रिति ( ७-३-५७ ) यङ्, 'वाऽन्यत्रे' ति ( ८-२-२७ ) यङ् लुक्, 'ह्वादिवच्च द्रष्टव्य' मित्युक्तत्त्वाद् द्वित्वं, 'र' इत्यकारः, 'कुहोश्चु' रिति ( ७-४-२६ ) गस्य जः 'आत' इति ( ७-४-३५ ) दीर्घः, ऋकारान्तत्त्वान्न ऋगादयः, गुणः, जागर्त्ति। 'वच परिभाषणे' वच्, यक्, संप्रसारणे उच्यते इति भाव्यम्, साधुत्त्वं तु 'उच समवाये' उच्, वर्त्तमाने तिप्, दिवादेर्य इति य प्रत्यये सिद्धं उच्यति ॥ ११ ॥

१-जगिश्छान्दस इति हैमः    २-त्यस्येतिद्विः

अस्यन्निति न शत्रन्तं, व्याघ्रा इत्यस्य चैकधा। बहुत्वं च तथैतेषामसुर्मेषारुरेव च ॥ १२ ॥

'अस्यन्निति' शत्रन्तं इति तावत् 'असु क्षेपणे' अस् अस्यतीति 'शतृशाना' विति (८-२-१७) शतृप्रत्ययः, दिवादेर्यः, अस्यन्, अशत्रन्तं तु 'षोऽन्तकर्म्मणि' षो, 'आदेः ष्णः स्नः' सो, दिवादिस्थः अन् प्रत्ययः, दिवादावद्, 'दिवादेर्यः' (७-१-१५) 'स्वो'-रिति (७-४-७२) ओकारलोपः, 'अदे' (७-३-१४) इत्यलोपः अस्यन् सिद्धं। व्याघ्रा इति जसन्तं प्रसिद्धम्, एकत्वे पुनरित्थं-'घ्रा गन्धोपादाने' घ्रा, दिवादि स्, भूते सिः, दिवादावद्, विआङ्पूर्वः 'घ्रासाच्छाशाधेटा' मिति सिलोपः, स्रो० व्याघ्राः सिद्धं। तथा एतेषां वक्ष्यमाणानां बहुत्वम्, असुः इति, असुशब्दः प्राणवाचकः १-१, बहुत्वं तु 'षोऽन्तकर्म्मणि' षो, दिवादि अन्, 'आदेः ष्णः स्नः', सो, 'भूते सिः' 'घ्रासाच्छाशाधेटा' मिति सिलोपः, 'स्याविद' (७-३-२१) इत्यन उस्, 'उस्यालोप' (७-३-२२) इत्यालोपः, स्वरहीनं, स्रो०, असुरिति सिद्धं, मेषेति मेषशब्दात् सम्बुद्धौ एकत्वं प्रसिद्धं, बहुत्वं तु 'कष शष जप झष' त्यादि, मष हिंसायां मष्, परोक्षे अग्रे अ, द्विश्च 'लोपः पचां किस्ये चास्ये' ति पूर्वलोपः एकारः, मेष सिद्धम्। अरुष् शब्दो मर्मवाची, 'दोषां रः' १-१, बहुत्वं तु 'रा दाने' रा, अनद्यतने अन् प्रत्ययः, अप्, 'अदादेर्लुगि' (७-१-१३) त्यपो लुक्, 'स्याविद'(७-३-२१) इत्यन उस्, उस्यालोपः, स्रो०, अरुः सिद्धम् ॥१२॥ पुनः समुच्चयाच्चस्य, शसन्तं पर्वतास्त्विति। आगमोऽनुजगृहे राजसे हरहरेऽव्ययम् ॥१॥चकारस्यानुक्तसमुच्चयार्थत्वात् पर्वत इति द्वितीयाबहुवचनान्तं, पर्व धातोः शतृप्रत्यये पर्वत्शब्दात्२-३ पर्वतः, 'गम्लृ गतौ' गम्, आङ्पूर्वः दिवादि स्, 'लिप्तुपादेर्ङे' (७-२-१५) इति अप्रत्ययः, दिवादावद्, स्रो० 'गमां स्वरे' (७-४-६८) इत्यत्र न ङे

इति वक्तव्यं, तेनाऽऽगमदित्यत्रालोपाभावः इति क्षेमेन्द्रवचनात् आगमः सिद्धम् । अनुजातः अनुजस्तस्य गृहमनुजगृहं ततः ७-१ स्याद्यन्तं, त्याद्यन्तं कथं ?, 'ग्रह उपादाने' ग्रह्, णबादि ए द्विश्च 'णबादौ पूर्वस्येति' ( ८-४-३२ ) सम्प्रसारणं, रस्य ऋकारः, 'र इत्यः 'कुहोश्चुः' ( ७-४-२६ ) 'ग्रहाङ्किति चे' ति ( ८-४-३१ ) द्वितीयसम्प्रसारणं, अनुपूर्वः अनुजगृहे सिद्धं । सह इना वर्त्तते इति सेः, राज्ञः सेः संबुद्धौ इति स्याद्यन्तं, त्याद्यन्तं तु 'राजृ दीप्त्या' मिति धातोः सेप्रत्यये अपि राजसे सिद्धम् । 'हृञ् हरणे' तुवादि हौ अप्प्रत्यये गुणे 'अत' इति ( ७-३-१३ ) हेर्लुकि सिद्धं हर, अस्यैव धातोरुभयपदित्वाद्वर्त्तमाने एप्रत्यये हरे रूपं साधु, अव्ययमिति 'व्येञ् संवरणे' इत्यस्य दिवाद्यमिप्प्रत्यये अपि दिवादावडित्यटि, अयि व्यय गतावित्यस्य वा रूपम् ॥

**एतानि न स्याद्यन्तानि, यस्य तस्याश्वमस्य च । शेलुर्विभीतको वेणुः, पञ्चेते स्म ऋणानि च ॥ १३ ॥**

'एतानी' ति, यस्येत्यादीनि स्याद्यन्तत्वेन प्रसिद्धानि, तानि त्याद्यन्तानि कथमिति प्रश्नः, तत्र 'यस्ये' ति 'यस् प्रयत्ने' हौ दिवादेर्य इति यप्रत्यये हेर्लुकि सिद्धम् । एवं 'तस क्षये' तस्य 'अस् क्षेपणे' इत्यस्य अस्य रूपं, यथा पूर्वं 'ओश्वि गतिवृद्ध्यो' रिति धातोः अश्व इति रूपं निष्पादितं तथा अमि प्रत्यये अश्वमिति सिद्धम् । शेलुः श्लेष्मातक इत्याभिधानात् १-१ स्याद्यन्तं, त्याद्यन्तं तु 'पल फल शल गतौ' शल्, यथा पेचुः तथा शेलुः सिद्ध्यति । विभीतकः-प्रतीतः, त्याद्यन्तं तु 'ञिभी भये' भी, वर्त्त० तस्, अप्कर्त्तरीत्यप्, 'ह्वादेर्द्विश्च' 'झपानां जबचपाः' 'ह्रस्वः' विभीतः, 'अव्ययसर्वनाम्ना' मिति सूत्रे चकारादाख्यातेऽप्यक् । 'अण रण वण व्रण गतौ' वण् वा 'वण शब्दे' इत्यस्य वेणुरिति प्रयोगो न भवति, वकारादीनां पूर्वलोपादेर्निषेधात्, तस्माद् रेणुरिति पाठो

द्रष्टव्यः, रण शब्दे, साधना शेलुवत्, वेणुरित्याह च हेमसूरिः, पञ्च इतः-प्राप्तः पञ्चाभिः पञ्चभ्य इतः-प्राप्तः तस्मिन् पञ्चेते इति स्याद्यन्तं, त्याद्यन्तं तु 'पचि व्यक्तीकरणे' पच्, वर्त्तमाने आते, अप् प्रत्ययः, 'इदित' इति ( ७-४-९६ ) नुम् 'आदाथ इः' (७-३-१६) पञ्चेते सिद्धं । स्म इति अतीतद्योतकः, स्मेति निपाति ह्रस्वः णत्त्वं ऋणानि सिद्धम् (?)॥१३॥ चस्य समुच्चयार्थत्वात्-समुच्चयात्पुनश्चस्य, प्रयोगास्त्यादिजा अमी । अस्यास्तस्याश्च यस्याश्च, कस्या इति चतुष्टयी ॥ १ ॥ 'अस् क्षेपणे' 'यस मोक्षणे' 'तस क्षये' 'कस गतिशातनयोः' कस्, आशिषि यास्, स्वरहीनं, अस्याः तस्याः यस्याः कस्याः इति रूपाणि स्युः ।

एकस्य कस्य धातोः स्यात्त्यादौ रूपचतुष्टयम् । पर्वाणि पर्वतं पर्व पर्वतोऽपूर्वमेव च ॥ १४ ॥

'एकस्ये' ति कस्यैकस्य धातोः त्यादौ स्याद्यन्तप्रतिरूपकं रूपचतुष्टयं भवतीति प्रश्नार्थः, 'पूर्व पर्व सर्व पूरणे' पर्व, परतः आनि तस् हि तुवादि तं प्रत्ययः, सर्वत्राप्प्रत्यये पर्वाणि पर्वतः पर्व पर्वतमिति रूपचतुष्टयं, पूर्वधातोर्दिवाद्यम्प्रत्ययेऽपि अटि 'अदे' अपूर्व सिद्धम् ॥ १४ ॥

चस्य समुच्चयार्थत्वात् । जलानि वातो वातं च, वातः प्रातस्तथैवहि । श्यामाऽध्यायोऽनलश्चाप्यक्षरं चस्य समुच्चयात् ॥ १ ॥ 'जल धान्ये' जल, आनिपि अपि जलानि । वा गतिगन्धनयोः वा, अत्र तस् तुवादि तं त, अप् 'अदादेर्लुक्' वातः वातं वात इति३रूपाणि । 'प्रा पालनपूरणयो' प्रा, वर्त्तमाने तसि अपि अदादेर्लुक् प्रातः । 'श्यैङ् गतौ, श्ये, वर्त्तमाने मस्,'

१ तुवादिमप्रत्यये ' अस् भुवि ' इत्यस्य स्मेति । 'ऋशूगतौ' क्र्यादौ स्वादौ आनिपि णत्वे ह्रस्वेऋणानि.

दीर्घत्वे 'दिस्योर्हसादि' ति सलोपः, 'रिलोपो दीर्घश्चे' ति (२-४-१२) रलोपः, अताताः, अथवा 'तनूकरणे तन्' अत्यर्थं तनोति 'तनोतेर्ना वा' इति ( तनोतेर्वा ७-४-७५ ) नस्यात्त्वं, शेषं प्राग्वत्। न विद्यते मर्म यासां ता इति विग्रहे 'टाडका' इति (६-३-१५) डप्रत्यये 'आवतः स्त्रिया' (६-२-१) मित्यापि अमर्म्माः १-३ रूपं, क्रिया तु 'मृद क्षोदे' मृद्, अत्यर्थं मृद्नाति यङ् लुक् द्विश्च रः 'ऋदुपधाना (रीगृ उपधायाः७-४-३७)' मिति ऋगागमः, अनद्यतने स् गुणः अर्, दकारस्य रत्वे 'दिस्योर्हसादि' ति सिपि लुप्ते 'रि लोपो दीर्घश्चे' ति अमर्मा इति सिद्धं। 'वट वेष्टने' वट्, अनद्यतने स् दिवादावट् अप् कर्त्तरीत्यप्, स्रो०, अवटः सिद्धं, 'वट परिभाषणे' इत्यस्य वा रूपं, अन्यथा तु 'अवटो गर्त्तः'। 'अनृणा' मिति, 'नृञ् नये' नृ, अनद्यतने अम्, 'ना क्र्यादेः' ( ७-१-२० ) 'प्वादेर्ह्रस्वः' ( ७-४-९३ ) णत्वं, सवर्णे०, अट् अनृणामिति सिद्धम्, नृशब्दः नञ्पूर्वः न नरोऽनरस्तेषामिति स्याद्यन्तं। 'वर्फ रफ रिफ गतौ' रफ्, परोक्षेऽप्रत्ययः, द्विश्च, 'लोपः पचां कित्ये चास्ये' ( ७-४-४५ ) ति पूर्वलोपः अकारस्यैकहसस्यैकारः, स्वर० रेफ सिद्धं। 'जिप् विप् मिष् निष् पृप् वृप् सेचने' विप्, तुदादि हिः, 'अप्कर्त्तरी' त्यप् 'उपधाया लघो' रिति ( ७-४-६० ) गुणः, 'अत' इति ( ७-३-१३ ) हेर्लुक्, स्व०, वेप सिद्धं। केचित्तु 'वप हिंसाया' मित्यस्य णादिमध्यमपुरुषबहुत्वे वेपेत्याहुः, तदसत्, लोपः पचां कित्ये चास्येति सूत्रे चकाराद्वकारादित्वादेत्त्वपूर्वलोपयोरसम्भवात्। रविशब्दादामन्त्रणे सौ, यद्वा रवशब्दस्य सप्तम्येकवचनान्तस्य स्याद्यन्तता, क्रिया तु 'रुङ् रोपणे' रु, वर्त्त० ए, 'अप्कर्त्तरी' त्यप्, गुणः, 'अदे' ( ७-३-१४ ) इत्यलोपः, अइ ए, रवे सिद्धं। 'पि गतौ' पि इत्यस्माद्यङि लुकि द्वित्वे 'यङी' ति ( ७-४-३४ ) पूर्वस्य गुणे गुण इति परस्य गुणे दिवादि-सिप्प्रत्यये स्रोर्वि० अपेपेः, यद्वा 'पिसृ पेसृ वेसृ गतौ' पिस्, अत्यर्थं पेसति 'अतिशये हसादे' रिति यङ् 'वाऽन्यत्रे' ति यङ्लुकि

दिवादिसिप्, दिवादावद्, गुणः, 'दिस्योर्हसादि' ति सिप्लोपः, 'स्रोर्विः' अपेपेरिति सिद्धम्। 'उर्वै तुर्वै थुर्वै दुर्वै धुर्वै जुर्वै अर्व भर्व शर्व हिंसायां' धुर्व्, ऐकार ऐदित्कार्यार्थः, अत्यर्थं धूर्वेति 'अतिशये हसादे' रिति (७-३-५७) यङ् लुक् द्वित्वं 'झपानां जबच-(चाश्च) पा' इति (७-४-२७) पूर्वधस्य दः, 'यङी' ति (७-४-३४) पूर्वनामिनो गुणः, 'लोपो व्योर्वस' इति क्षेमेन्द्रकृतवृत्ति-सूत्रेण वकारलोपः, दो धुर् इति स्थिते दिवादितप्रत्ययः, दिवादावद् इत्यद्, 'य्वोर्विहसे' (७-४-१२) इति दीर्घत्वे रेफस्योर्ध्वग-मने द्वित्वे अदोधूर्त्त सिद्धं। अनिल इति 'णिल गहने' णिल्, तुदादिः, 'आदेः ष्णः स्नः' इति नत्वे दिवादिसिप्प्रत्यये 'तुदादेर' (७-१-१९) इत्यप्रत्ययेऽनिलः । कुत इति 'टु क्षु रु कुक् शब्दे' ककारः परस्मैपदार्थः, वर्त्त० तस्, अप्, अदादेर्लुगित्यपि लुकि कुतः सिद्धम्, स्याद्यन्तता सुगमेति न लिखिता ॥ १६ ॥

अरये नभसे पयसे वयसे लोके नसे गवे वृक्षे। अहयोऽकवेऽयसे लेखे रेखे रजसि रेजेऽलिट् ॥ १७ ॥

'अरये' इत्यादि, स्याद्यन्ताः सुगमाः, क्रियारूपे तु साधनां ब्रूमः, 'अय वय पय मय नय रय गतौ' भ्वादिः रय्, दिवादि-इप्रत्ययः, अप्कर्त्तरीत्यप्, दिवादावद्, अइ ए अरये। 'णुभ णभ हिंसायां' णभ्, आदेः ष्णः स्नः, नभ्, वर्त्त० सेऽप् नभसे। 'अय वय पय मय गतौ' पय् वय्, नभसेवत् साधना, पयसे वयसे। 'लोकृ दर्शने' लोक्, वर्त्त० ए, अप्, अदे, अइए, लोके। 'णस् कोटिल्ये शब्दे वा' णस्, आदेः ष्णः स्नः, नस्, वर्त्तमाने ए, 'अप् कर्त्तरी'त्यपि नसे, नासिकाशब्दस्य चतुर्थ्येकवचने नसादेशे, यद्वा शकट-पर्याये अनस्शब्दे चतुर्थ्येकवचनान्ते ज्ञेयं स्याद्यन्तं। उङ् कुङ् पुङ् गुङ् घुङ् शब्दे, गु वर्त्तमाने ए, अप्, गुणः, ओ अव्, गवे सिद्धं।

'वृक्ष वरणे' वृक्ष्, वर्त्तमाने ए, अप्, वृक्षे, यद्वा अनयोरेव धात्वोः अनद्यतने इप्रत्यये अगवे अवृक्षे सिद्धं। अहय इति, हयशब्दान्नञ्पूर्वात् १-१ अहिशब्दाद्वा जसि, क्रिया तु 'हय गतौ' ( क्रान्तौ वा ) हय्, अनद्यतने सि, अप्, दिवादावद्, स्रो०, अहयः सिद्धं। 'उङ् कुङ्' कु, वर्त्तमाने इप्रत्यये (नजि) सिद्धं, त्याद्यन्तं, स्याद्यन्तं तु न कविः अकविस्तस्यामन्त्रणे, नञ्पूर्वात् कुशब्दाच्चतुर्थ्यां वा अकवे इति ज्ञेयम्। अयसे इति लोहवाची चतुर्थ्यन्तः, क्रिया तु 'अय गतौ' अय्, वर्त० से, अप्, अयसे सिद्धम्। 'उख नख णख० गतौ' 'लख् रख्' परोक्षे एप्रत्ययः, द्विश्च 'लोपः पचा'मितिपूर्वलोपः एकारश्च लेखे रेखे सिद्धं। रजसि इति पांशुरेणुः ७-१, क्रिया तु 'रंज रागे' रंज्, वर्त्त० सि, अप्, 'अपि रांजिदंशे'(?) ति नलोपः, स्वर० रजसि सिद्धं। 'रेजे अलिडिं'ति लिट् इति परोक्षप्रत्ययानां संज्ञा पाणिनीयानां, परोक्षप्रत्ययं विना रेजे इति व्युत्पादनीयं, परोक्षे त्वेवं-'राजृ दीप्तौ' राज्, परतः णवाद्यात्मनेपदे ए द्विश्चेति द्वित्वं, रराज् ए इति स्थिते 'लोपः पचां कित्ये चास्ये' ( ७-४-४५ ) ति सूत्रस्थचकारात् पूर्वस्य रस्य लोपः अकारस्य एकारः, स्वरहीनं, रेजे इति सिद्धम् परोक्षं विना रेजे इति कथं सिद्ध्यतीति प्रश्नः, इहोत्तरं-'रेजृ दीप्तौ रेज्, ऋकार इत्, भ्वादिः, तिबाद्यात्मनेपदोत्तमपुरुषैकवचनं ए, अप्कर्त्तरीत्यप्, अदे इत्यलोपः, यद्वा 'ऋजि गतिस्थानार्जनेषु' अमुं कश्चिद् व्यञ्जनादिं पठति, तन्मतमाश्रित्य प्रयोगोऽयं रिज्, गुणकृतस्तु विशेषः, शेषं प्राग्वत्, रेजे इति सिद्धम् ॥ १७ ॥

**अद्यौर्न नञ्समासोऽयं, सर्वेषामिति चैकता। अन्येषामपरेषां च, केषां कासां तथा दृश ॥ १८ ॥**

'अद्यौ' रिति न द्यौरद्यौरिति नञ्समासः, प्रतिपक्षस्तु 'द्यु अभिगमने' द्यु, अन० सि दिवादावद् 'ओरा' ( ७-४-८२ ) वि-

त्यौकारः, स्त्रो०, अद्यौः सिद्धं। सर्वेषामिति, सर्वा चासौ ईषा च सर्वेषा ताम् २-१, 'ईषा सीते तद्दण्डपद्धती' इतिहैमाभिधाने। अन्येषां अपरेषां च सर्वेषांवत् ज्ञेयौ। कस्य ईषा केषा तां २-१। कासामिति 'कासृ शब्दकुत्सायां' कास्, कासनं कासा, गुरोर्हसादि' (८-४-२०)- त्यप्रत्ययः, 'आवतः स्त्रिया' (६-२-१) मित्याप्, २-१। 'दंश दंशने' दंश, तुदादि हिः, अप्, 'अपि रंजिदंशे' ति नलोपः, 'अत' इति हेर्लुकि दश इति सिद्धिः। एते एकवचनान्तत्वाद्विभ्रमविषयाः, चस्य समुच्चयार्थत्वं दर्श्यते—**समुच्चयाच्चकारस्य, चक्र सम्बोधनं विना। अवस्था इति शब्दोऽपि, स्यादेकवचनः कथम्?, ॥ १ ॥** तेन चक्र इति आमन्त्रणैकवचनान्तप्रतिरूपकम्, बहुवचनान्तं तु वच्मः-'डुकृञ् करणे' कृ, परोक्षे अ, द्विश्च, रः, 'कुहोश्चुः' (७-४-२६) 'ऋ र' मिति रत्वे चक्रेति सिद्धम्। 'वस आच्छादने' वस्, अनद्यतने थास्, दिवादावट्, अप्, अदादेर्लुगित्यपो लुक्, स्वर०, स्रोः अवस्थाः ॥ १८ ॥

**अगारं द्वे पदे स्यातां, प्रथमान्तं शुनस्तथा। कर्तृरूपे कथं स्यातां, दीयते धीयते तथा ? ॥ १९ ॥**

अगारमिति गृहवाचि एकं पदं, द्वे पदे तु 'अग कुटिलायां गतौ' अग्, तुवा० हि, अप्, अतः, स्वर०, अग सिद्धं। 'ऋ गतौ' ऋ, अद्य० अम्, 'लित्पुषादे' (७-२-१५) रित्यप्रत्यये गुणे अटि आरं, अगारं सिद्धं, यद्वा 'इण गता' विति धातोर्दिवादिसिपि भूते सिरिति सौ 'दादेः पे' (७-३-१०) इणः सिलोपे गा इति कृते अटि अगाः, रमिति 'रः कामे तीक्ष्णे वैश्वानरे नरे। रामे वज्रे' इत्येकाक्षरोक्तेः रशब्दात् २-१, यद्वा अगशब्दात् सम्बुद्धौ अरमित्यत्यर्थं अगारमिति। शुनशब्दात्प्रथमैकवचने स्रो०, यद्वा 'शुन गता' वित्यस्य शुनतीति 'नाम्युपधात्क' (८-१-५) इति के १-१ शुनः। 'डुदाञ् दाने' 'दाप् दाने' 'दो अवखण्डने' 'देङ्

पालने' इत्येतेषां चतुर्णां तेप्रत्यये भावकर्म्मणोर्यकि 'दादेरि' ( ७-४-१५ ) रितीत्त्वे दीयते इति स्यात् , 'धेट् पाने' 'डुधाञ् धारणपोषणयो' रनयोर्भावकर्म्मणोर्यकि धीयते इति भवति, तत्र कर्त्तरि कथं स्यातामिति प्रश्नः, 'दीङ् क्षये' 'दी धीङ् अनादरे' धी, वर्त्त० ते, 'दिवादेर्य' ( ७-१-१५ ) इति यप्रत्यये दीयते धीयते ॥ १९ ॥

त्याद्यन्तमालयं प्रोक्तमसमस्तमजापयः । अन्यान्योऽनालयश्चैव, ह्यश्वालयमशालयः ॥ २० ॥

'त्याद्यन्त' मिति, आलयशब्दो गृहवाची पुल्लिङ्गः,द्वितीयैकवचने आलयं इति स्याद्यन्तं, त्याद्यन्तं पुनरेवं 'अली भूषणपर्याप्तिवारणेषु' अल्,अलन्तं प्रयुंक्ते 'धातोः प्रेरणे' (७-४-८) इति ञिप्रत्ययः, ञित्त्वाद् वृद्धिः, आलि इति स्थिते परतो अन० अम्, 'अप् कर्त्तरी' त्यप् गुणायादेशौ, अटि, स्वर०, सवर्णे, आलयं सिद्धं । अजायाः पयोऽजापय इति षष्ठीसमासे प्रसिद्धमेतद्, असमस्तं तु कथमिति प्रश्नः, तत्र 'जप मानसे च' मनोनिर्वर्त्त्ये वचने इत्यर्थः, चाद् व्यक्ते वचने जप्, जपन्तं प्रेरयति 'धातोः प्रेरण' (७-४-८) इति ञिः, वृद्धिः, जापि, अन०स्, अप्, गुणे अयादेशे दिवादावाडित्यटि स्व०स्रो० अजापयः, यद्वा 'जि अभिभवे' जिधातोः प्रेरणे ञिः, जयन्तं प्रयुंक्ते, 'इङादेर्ञौ पुगि'ति पुक्, इकारस्य आ, जापि, शेषं प्राग्वत् , अजापयः सिद्धं । 'णीञ् प्रापणे' णी, नी, नञ्पूर्वः न नी अनी अन्याश्च ता अन्यश्चान्यान्यः १-२ प्रथमाबहुवचने सवर्णे० स्रो० । अश्वालयमिति अश्वानामालयः अश्वालयस्तमिति समासपदं, असमासे तु 'श्वल श्वल्ल गतौ' श्वल्, श्वलन्तं प्रेरयति धातोः प्रे० ञिप्र० वृद्धिः, श्वालि अन०अम् अपि गुणे अयादेशे अश्वालयमिति सिद्धं । चैव हीति छन्दःपूरणे निपातः । 'णल गन्धे' णल्, नलन्तं प्रयुंक्ते प्रेरणे ञिः वृद्धिः नालि अनद्य०

स् अपि गुणे अपि स्वर० स्रोर्वि० अनालयः । 'शल चलने वा' 'शाल कत्थने वा' 'पल फल शल गतौ' शल्, शलन्तं प्रेरयति अनालयवत् साध्यं अशालयः, ॥ "अजिनान्यधिक्षताधुक्षतेत्याद्यपराण्यपि। शेषे च देवता देवतामित्यादि चकारतः ॥१॥" अजिनानि 'ज्या वयोहानौ' ज्या क्रयादिः, आनिप् 'ना क्रयादे' रिति नाप्रत्ययः, 'ग्रहाङ्क्तिति चे' (८-४-३१) संप्रसारणं यकारस्य इकारः, दीर्घस्य दीर्घः जी 'प्वादेर्हस्व' इति जि नञ्पूर्वः, न जिनानि अजिनानि सिद्धं । 'धिक्ष धुक्ष सन्दीपनक्लेशनयाचनेषु' धिक्ष् धुक्ष्, अनद्य० तप्र० दिवादावद्, अप्कर्तरीत्यप्, स्वर० अधिक्षत अधुक्षत सिद्धं, यद्वा 'दिह उपचये' दिह्, 'दुह प्रपूरणे' दुह् अन० तन् प्र०, ' हशषान्तात् सगि (७-२-१३) ति सक् प्रत्ययः 'दादेर्घः' (४-४-१५) 'आदिजबानां झभान्तस्ये' ति (४-४-२८) दस्य धः, 'खसे चपा झसाना' मिति ( ४-४-२५ ) घस्य कः, कषसंयोगे क्षः अधिक्षत अधुक्षत । 'शीङ् स्वप्न' इत्यस्यात्मनेपदिनः वर्त्तमाने मध्यमपुरुषैकवचने शेषे । 'देवृङ् देवने' देव्, वर्त्त० ते, तुबादि तां, अप्, देवते देवतां सिद्धम् ॥ २० ॥

अन्याधयोऽसमस्तं स्यात्, येयेषांचक्रिरे पदम्। अक्षेपयस्तथा चान्यदक्षेवयममीवयम् ॥ २१ ॥

॥ इति कातन्त्रविभ्रमसूत्रं सम्पूर्णम् ॥

' अन्याधय ' इति, न विद्यते व्याधिर्येषां ते अन्याधयः इति समस्तम्, असमस्तं तु ' व्यध ताडने ' व्यध्, विध्यति कश्चित्तमन्यः प्रयुङ्क्ते 'धातोः प्रेरणे' जिः, वृद्धिः, व्याधि, अनद्य०स् शेषं अशालयवत् साध्यम् अन्याधयः । येयेषांचक्रिरे इति पदत्रयंसदृशमेकं पदं कथं स्यादिति साध्यते, 'येषृङ् प्रयत्ने' येष्, अत्यर्थं येपते 'अतिशये हसादे' रिति ( ७-३-९७ ) यङ् द्वित्वं येयेष्

‘कासादिप्रत्ययादाम् कस्भूपर’ इत्याम् प्रत्ययः, चक्रिरे ‘डुकृञ् करणे’ इति धातोः परोक्षे इरे प्र०, येयेषांचक्रिरे पदं सिद्धं। ‘क्षिप प्रेरणे’ क्षिप्, क्षिपति कश्चित्तमन्यः प्रयुङ्क्ते प्रेरणे ञिः, गुणे क्षेपि अनद्य० स् अपि गुणे अयि अक्षेपयः सिद्धं। ‘ष्ठिवु क्षिवु निरसने’ क्षिव्, क्षिवन्तं प्रेरयति प्रेरणे ञिः, गुणे क्षेवि, अनद्य० अम्, अक्षेवयं सिद्धं। ‘पीव मीव नीव स्थौल्ये’ मीव, मीवन्तं प्रयुङ्क्ते, शेषं सुगमम्, अमीवयं सिद्धम् ॥ २१ ॥———अन्येऽपि केचिद्विभ्रमप्रयोगा लिख्यन्तेः “**असतीति कथं साधु, करतीति तथाऽपरम्। कथमेतानि साधूनि, वोच्यते भवते सह ॥१॥**” ‘अस गतिदीप्त्यादानेषु’ ‘कृञ् करणे’इत्येतयोर्भौवादिकयोर्वर्त्तमाने परस्मैपदप्रथमैकवचने असति करतीति रूपे सम्पद्येते, वचेर्यङन्ताद्भावकर्म्मणोरात्मनेपदे यकि उत्तरस्य सम्प्रसारणे पूर्वस्य तु ‘न सम्प्रसारणे सम्प्रसारण’ मिति निषेधे उ ओ वोच्यते इत्येतत् सम्पद्यते। ‘भू सत्तायां’मिति धातोरुदात्तेत्त्वात् परस्मैपदित्वे आत्मनेपदाभावे प्रश्नः, भू प्राप्तौ आत्मनेपदी भू, वर्त्तमाने, ते, अपः पित्त्वाद् गुणे भवते, न चैतदशुद्धमित्याशङ्कनीयम्, ‘उत्साहाद्भवते लक्ष्मी’ रिति स्मरणात्। सहेरनुदात्तेत्त्वात् परस्मैपदानुपपत्तेः प्रश्नः, ‘षह मर्षणे’ तुवादिहौ सह, न तु सहेः परस्मैपदप्रयोगे शङ्का कार्या, तथा च प्रयोगः,-“नदीकूलं भित्त्वा कुवलयवदुत्पाट्य च तरून्मदोन्मत्तान् हत्वा करणदन्तैः (शनैश्च) प्रतिगजान्। जरानारीमाप्त्वा तरुणजनविद्वेषणकरीं, स एवायं नागः सहति कलभेभ्यः परिभवम् ॥१॥” **मारिरेकाम मामिमीमाम मामीमिले तथा। असीदामादिका ज्ञेया, प्रयोगा अनया दिशा ॥ २ ॥** ‘रेकृङ् शकृङ् शङ्कायां,’ रेक्, रेकते कश्चित्तमन्यः प्रयुङ्क्ते ‘धातोः प्रेरणे’ इति ञिः, रेकि, अन० मप्र० ‘ञेरङ् द्विश्चे’ (७-२-१४) त्यङ् प्रत्ययः, द्विश्च मापूर्वः ‘भेट’ (७-३-११) इत्यटो लोपः, ञे ह्रस्वः ‘न ऋत’ इति (७ ४-४१) पूर्वलघोर्दीर्घस्योपधाह्रस्वस्य च निषेधः, ‘ङ्मोरा’ (७-३-१५)-

इत्यास्वे मारिरेकाम सिद्धं । 'अम द्रम हम मीमृ गमृ गतौ' मीम्, मीमन्तं प्रेरयति धातोः प्रे० ञिः, शेषं प्राग्वत्, न ऋतः, मामिमीमाम सिद्धं । 'मील स्मील क्ष्मील निमेषणे' संकोचे इत्यर्थः, मील, मीलन्तं प्रेरयति प्रेरणे ञिः, अनद्य० इप्र० ' 'ञेरङ् द्विश्चे'-त्यङ् ( ७-२-१४ ) प्रत्यये द्वित्वे 'ञे' रिति ( ७-४-७१ ) ञिलोपे लघोर्दीर्घः मामीमिले सिद्धं । 'षद्‌ विशरणगत्यवसादनेषु, षद्, 'आदेः ष्णः स्नः' अन० मप्रत्ययः अद् अप् 'दृशादेः पश्यादे' रिति ( ७-४-८४ ) सदः सीदादेशे 'व्मोरा' इत्यास्वे असीदाम सिद्धं । 'चदि आल्हादनादनयोः' चद्, 'टुणादि समृद्धौ' नत्वे नद्, 'वदि अभिवादनस्तुत्योः' वद्, 'णिदि कुत्सायां' निद्, अत्यर्थं चन्दति नन्दति वन्दते निन्दति 'अतिशये हसादे' रिति ( ७-३-५७ ) यङ् द्विश्च, 'वाऽन्यत्रे' ति ( ८-२-२७ ) यङ् लुक् 'आत' इति ( ७-४-३५ ) दीर्घः, चा, वा, ना, निदिधातोर्गुणः 'यङी' ति ( ७-४-३४ ) पूर्वस्य गुणः अनद्य० स्, दिवादावद्, सौ पदान्ते रेफप्रकृत्योरपि द् र्, 'दिस्योर्हसा' दिति ( ७-३-३ ) सलोपः सो० अचाचः, अनानः अवावः अनेनेः इति सिद्धम् । 'शुच शोके' शुच् 'क्रुध कोपे' क्रुध, 'क्रुध कुत्सायां' 'शृध् वृध वृद्धौ' वृध, 'गृध् अभिकाङ्क्षायां' गृध् अत्यर्थं शुध्यति क्रुध्यते शर्धते वर्धते गृध्यति, 'अतिशये' ( ७-३-१५ ) हसादेरिति यङ् 'वाऽन्यत्रे' ति यङ्लुक् द्विश्च 'यङी'-ति (७-४-३४) पूर्वनामिनो गुणः शो क्रो शृध्वृधगृध्धातूनां ऋकारान्तानामिति वक्तव्ये न पूर्वस्य रुक् 'कुहोश्चु' रिति (७-४-२६) कुत्वस्य चुत्वं, दिवादावद्, गुणः, 'स धातु' ( ७-४-१० ) रित्यनद्य० स्, अप्, 'अदे' ( ७-३-१४ ) इत्यलुक्, 'दधो रत्व'-मिति ध् र्, 'दिस्योर्हसा' दिति ( ७-३-३ ) सलोपः, 'रिलोपो दीर्घश्चे' ति रलोपः, दीर्घत्वं, अशोशोः अचोक्रोः अशर्शाः अवर्वाः अजर्धाः इति रूपाणि सिद्धानि । 'कस गतिशातनयोः' कस्, अतिशयेन कसति यङ् 'वाऽन्यत्रे' ति यङ्लुक्,

'ह्वादिवच्च द्रष्टव्य' मित्यनेन अवादि कार्यम्, अप्, द्वित्वं 'कुहोश्चुः' (७-४-२६) अन० स् 'पदां नीगि' ति पूर्वस्य नीक्, दिवादावट्, विपूर्वः, 'दिस्योर्हसादि' ति (७-३-३) स् लोपः, सो०, व्यचनीकः सिद्धं ॥

बाणाश्विषडिन्दु (१६२५) मितिसंव्वति धवलकपुरवरे समहे । श्रीखरतरगणपुष्करसुदिवापुष्टप्रकाराणाम् ॥ १ ॥ श्रीजिनमाणिक्याभिधसूरीणां सकलसार्वभौमानाम् । पट्टे वरे विजयिषु श्रीमज्जिनचन्द्रसूरिराजेषु ॥ २ ॥ गीतिः । वाचकमतिभद्रगणेः शिष्यस्तदुपास्त्यवाप्तपरमार्थः । चारित्रसिंहसाधुर्व्यदधादवचूर्णिमिह सुगमाम् ॥ ३ ॥ यल्लिखितं मतिमान्द्यादनृतं प्रश्नोत्तरेऽत्र किञ्चिदपि । तत् सम्यक् प्राज्ञवरैः शोध्यं स्वपरोपकाराय ॥ ४ ॥

## ॥ इति कातन्त्र(सारस्वत)विभ्रमावचूरिः सम्पूर्णा ॥



# श्रीमद्राजशेखराचार्यकृता दानषट्त्रिंशिका सावचूर्णिः

अवतरणिका-बहवोऽपि हि देवाः क्षेत्रं मर्यादीकृत्य इन्द्रं यावत् तत्तद्वृद्धियुक्तास्तत्तत्स्थाननिवासिनस्तत्तत्कार्यकारिणः सन्ति, तेऽपि लोकोपकारनिरता धर्म्मोद्यमे सान्निध्यं पावित्र्यं संचित्य कुर्वन्ति, यथा भरते निधिस्था देवाः कृष्णे वैश्रवणः कर्णे सूर्यः नले युधिष्ठिरेऽपि रविः विक्रमे आगियाकः शालिवाहने भारती शेषौ जयसिंहदेवे वर्बरेश्वरौ, परं परमपु(पौ)रुषानुज्ञयैव विदधति, यतः- "कृतप्रतिज्ञस्य पुरुषस्य, देवा यान्ति सहायताम्" यस्य तु देवस्य स्थावराणामपि दातॄणामुपकारकत्त्वं विलोक्य शृङ्गारादिसामग्रीं चकार, किं पुनर्विद्यावतां भाग्यवतां विशेषज्ञानां सत्क्रियाणां गुरुभक्तानां विवेकिनां ?, अत एवोच्यते-

**दातुर्वारिधरस्य मूर्द्धनि तडिद्गाङ्गेयशृङ्गारणा, वृक्षेभ्यः फलपुष्पदायिनि मधौ मत्तालिवन्दिश्रुतिः ।**
**भीतत्रातरि वृत्तिदातरि गिरौ पूजा झरैश्चामरैः, सत्कारोऽयमचेतनेष्वपि विधेः किं दातृषु ज्ञातृषु ? ॥१॥**

भाग्यवति उदयिनि कुले कश्चित्पुमानुत्पद्यते, सर्वगुणानां निधिः सः, यथा जले सर्वबीजानि यथा भूमौ सर्वान्नोत्पत्तिः, यथाऽग्नौ आहारशक्तिः, यथा इन्द्रे प्रभुत्वं, तथा सत्पुरुषे गुणाः, तेन महात्मना पुरुषेण सर्वं चित्ते ध्रियते, परं याचकेभ्यो दत्तं हृदयेन धार्यते, अतः श्रूयताम्-

पित्रोर्वत्सलता गुरोर्व्रतभृतः शिक्षाप्रसादः प्रभोः, सद्वृत्तं सुतकल्पभृत्यसुहृदां तत्तत्क्रियाभिग्रहाः ।
छन्दोज्योतिषतर्कलक्षणकथौचित्यं चिरं धार्यते, सर्वं सत्पुरुषैः क्षणादपि परागू दत्तं तु नेत्यद्भुतम् ॥ २ ॥

पुरुषाहीनाः सेवका अपिकर्म्मकरा अपि निर्द्धना अपि कर्म्म कुर्वाणाः सर्वाणि सौख्यानि प्राप्नुवन्ति, परं श्रीभरतादिभिः सत्पुरुषैः समयं प्राप्य लोकोपकारः कृतः, तेन चासंसारं विश्वे कीर्त्तयः स्थिरतामानञ्चुः ॥ यतः--

आरोहन्ति सुखासनान्यपटवो नागान् हयाँस्तज्जुषस्ताम्बूलाद्युपभुञ्जते नटविटाः खादन्ति हस्त्यादयः ।
प्रासादे चटकादयोऽपि निवसन्त्येते न पात्रं स्तुतेः, स स्तुत्यो भुवने प्रयच्छति कृती लोकाय यः कामितम् ॥३॥

कलिकाले करालेऽस्मिन् सकलोपकारकाः कल्पद्रुमादयो लोकोपकारं न कुर्वन्ति, न च दृश्यन्ते, इन्द्रादयः सुखस्वादरसपरवशाः, पूर्वजास्तु भोगीभूय सन्तानिनां पीडां कुर्वते, तैः सार्द्धं सत्पुरुषस्य उपमा न घटते, सम्प्रत्यसत्त्वात्, जलधरस्तु सकलधरातललतितलावण्यकारी, उक्तञ्च-"सम्प्रति न कल्पतरवो न सिद्धयो नापि देवता वरदाः । जलद ! त्वयि विश्राम्यति सृष्टिरियं भुवनकोशस्य ॥ १ ॥" तेन सार्द्धं सत्पुरुषस्योपमा युक्ता, जलधरस्य सत्पुरुषेण सहोपमा विद्यते, तथापि सत्पुरुष उत्तम एव, यतः-

स्फातिं यन्धुसरांसि यान्तु परितः कीर्त्तिश्रवन्त्यः स्फुरन्तूच्चैर्मोदतु दीनदुर्दरकुलं विद्वन्मयूरैः सह ।
म्लायन्त्याशु जवासकाः खलजनाः स्वर्णाम्बुदानोद्यते, सत्पाथोमुचि विस्मयोऽयमिह मे मालिन्यगर्जा न यत् ॥४॥

तिर्यक्षु सिंहादयो बले तुरङ्गास्तु शीघ्रगतौ भारोद्वहने वृषभाः दुग्धोत्पत्तौ गावः विषमे रणे राजद्वारे परमे लक्ष्मीविलासे महास्वप्ने उच्चत्वे गजा एव श्लाघ्यन्ते, तैः सार्द्धमुपमानं सत्पुरुषस्याहोश्विदाधिक्यं ?, आधिक्यमेव प्रतीमः, यतः--

